

# राष्ट्रिय संस्कृत संस्थानम्

नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ३ ॥

वर्द्धमानोपाध्यायविरचितः

# अन्वीक्षानयतत्त्वबोधः

सम्पादकः

के॰ रघुनाथन्



**Rashtriya Sanskrit Sansthan**

*(Under the auspices of the Ministry of Education and Social Welfare, Govt. of India)*

*New Delhi*

*

**Ganganatha Jha Kendriya Sanskrit Vidyapitha**

**TEXT SERIES**

*

*General Editor*

Dr. G. C. TRIPATHI

*

**No. 3**

# ANVĪKṢĀNAYATATTVABODHA

**(A Commentary by Shri Vardhamanopadhyaya on the 5th chapter of the Nyayasutras of Gautama)**

*Edited by*

Shri K. Raghunathan

*Revised by*

Dr. Kiṣhora Nath Jha




**Allahabad**

**1979**

राष्ट्रियसंस्कृतसंस्थानम्

( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )

नव देहली

*

# गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः

गयाचरण त्रिपाठी

*

तृतीयं प्रसूनम्

# अन्वीक्षानयतत्त्वबोधः

(श्रीवर्धमानोपाध्यायविरचिता पञ्चमाध्यायात्मिका न्यायसूत्रवृत्तिः)

सम्पादकः

श्रीकोदण्डरामरघुनाथः

*

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

मोतीलाल नेहरू पार्क

प्रयागः–२

॥ ३ ॥

वर्द्धमानोपाध्यायविरचितः

# अन्वीक्षानयतत्त्वबोधः

सम्पादकः

के० रघुनाथन्

पुनरीक्षकः

डा० किशोरनाथ झा




गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

मोतीलाल नेहरू पार्क

प्रयागः–२

१९७९

## FOREWORD

We are happy to present to the world of Sanskritists *Anvīkṣānayatattvabodha*, a scholarly treatise by Vardhamāna Upadhyaya, ably edited by Shri K. Raghunathan, Research Assistant in this Vidyapeetha. The *Anvīkṣānayatattvabodha* is an extensive Commentary on the fifth Adhyāya of the Nyāyasūtras which treats mainly the topics *Jāti* and *Nigrahasthāna* and it goes deep into details. Vardhamāna Upadhyaya belonged to Mithila and is said to be the son of the famous logician Gaṅgeśa Upadhyaya who flourished in the 13th c. A. D.

Only two manuscripts of the above work are known to exist; one in the Manuscripts Library of the G. N. Jha Kendriya Sanskrit Vidyapeetha and the other in the Saraswati Bhavan Library of Varanasi. Shri Raghunathan has made use of both for preparing this edition.

Whether the author picked up only the fifth Adhyāya of the Nyāyasūtras for commenting due to its special importance or he commented upon the whole text, is difficult to determine at present. It may, however, be brought to the notice of the scholars that this Vidyapeetha possesses a manuscript of the commentary of Vardhamāna on the first three sūtras of the Nyāyasūtras too which is referred to in the colophone as *Trisūtrīvṛtti*. There seems to be a close resemblance between the *Anvīkṣānayatattvabodha* and the *Trisūtrīvṛtti* in terms of language and style which would mean that Vardhamāna wrote a full commentary on the Nyāyasūtras of which only two fragments, namely the first three sūtras and the fifth chapter are available; the rest is yet to be traced.

Shri Raghunathan proposes to take up the task of editing the *Trisūtrīvṛtti* next which will shed some more light on the nature of this Commentary as well as on its author. The editor has studied Navyanyāya in Varanasi at the feet of such illustrous an authority on Nyāya as Pt. Badarinatha Shukla, at present Vice Chancellor of the Sanskrit University, Varanasi and has carried out the task of editing the text in a commendable manner. The annotations

provided by him in the footnotes ( printed in white ) help the reader in understanding less clear portions of the text.

The text as well as the introduction part of the work has been thoroughly revised by Dr. Kishora Nath Jha, Lecturer in Nyāya at this Vidyapeetha, who deserves my thanks.

I am sure that the present work which is being brought to light for the first time by this Vidyapeetha shall be received well by the scholars.

**Dr. G. C. Tripathi**
*Principal*
G. N. Jha K. S. Vidyapeetha,
Allahabad.

March 30, 1979 ]

# भूमिका

## १. उपक्रमः

अथेदानीं महर्षिगौतमप्रणीतन्यायसूत्राणां महर्षिवात्स्यायनप्रणीततद्भाष्यानुसारिणी नव्यन्यायप्रवर्तकसर्वतन्त्रस्वतन्त्रगङ्गेशोपाध्यायतनूभववर्धमानोपाध्यायेन प्रणीता वृत्तिः सम्पाद्य विदुषां समक्षमुपस्थाप्यते। वृत्तिश्चेयं न्यायसूत्रपञ्चमाध्यायमात्रस्योपलब्धा शास्त्रार्थे समपेक्षितयोः, न्यायशास्त्रप्रसिद्धयोः जातिनिग्रहस्थानयोः लक्षणविवेचनपरा सती पठनमात्रेणैव विदुषाममन्दमानन्दं जनयति।

नव्यन्यायशास्त्रस्य मूलस्तम्भभूतं प्रमाणतत्त्वविवेचनात्मकं तत्त्वचिन्तामणिग्रन्थं प्रारभमाणः, सर्वतन्त्रस्वतन्त्रः, तत्र भवान् गङ्गेशोपाध्यायः न्यायशास्त्रस्य परमप्रयोजनमाचष्टे—

"अथ जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुः, अष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय"[१] इति।

सर्वमेव शास्त्रं परेषां तत्त्वाववबोधायारच्यते। परावबोधश्च परार्थानुमानं विना न सम्भवति। परार्थानुमाने च प्रतिज्ञादेः पञ्चावयवस्यावश्यकता सुधीभिरनुभूता। तस्य च परिज्ञानमान्वीक्षिकीं विना न सम्भवति। तस्मादेतादृशसाम्राज्यवती सकलशास्त्रोपयोगिनी, सकलविद्यानां प्रदीपात्मिकाऽन्वीक्षिकी, सामान्यतः दर्शनेऽन्तर्भवन्त्यपीतरदर्शनासाधारण्येन वर्तत इति कस्य बुद्धिमतो न विदितम्। अत एव हि न्यायशास्त्रपरिज्ञानं विना कस्मिंश्चिदपि शास्त्रे सम्यक् प्रवेशो दुष्कर एवेति समनुभूयते। एतस्मादेव हेतोरभ्यर्हिततमत्वमेतस्याः प्रतिपादितं तत्त्वचिन्तामणिकृता गङ्गेशोपाध्यायेन।

ऐतिहासिकदृष्ट्या यदि न्यायशास्त्रस्य कालविभागः क्रियते, तदाऽऽदिमकाले न्यायसूत्रमारभ्य परिशुद्धिपर्यन्तस्य समावेशो भवति। भाष्यवार्तिक-तात्पर्यटीका-परिशुद्धिरूपा न्यायचतुर्ग्रन्थिका विद्वद्भिस्समादृता विराजते।

"यदप्यतिपटीयसी जयति सा चतुर्ग्रन्थिका"

इति नवीनवाचस्पतिमिश्रैः न्यायतत्त्वालोके उक्तम्। अस्याश्च चतुर्ग्रन्थिकायाः जैनाचार्याभयतिलकोपाध्यायकृतः न्यायालङ्कारः, श्रीकण्ठकृतं पञ्चप्रस्थानन्यायटिप्पणकं च सम्प्रदायसंरक्षणपरं दृश्यते।

---

१. तत्त्वचिन्तामणिः प्रामाण्यवादः।

मध्यकाले भासर्वज्ञाचार्यप्रणीतं न्यायभूषणं, भट्टजयन्तस्य च न्यायमञ्जरी समायाति। सूत्रव्याख्यानावसरे भगवान् वात्स्यायनः यथा काणादशास्त्रेण प्रभावितः परिलक्ष्यते तथा भासर्वज्ञाचार्यः वैशेषिकशास्त्रे आत्मनः द्वेषं प्रदर्शयति। उद्योतकराचार्येण सहापि भाष्यकारस्य यथा वैमत्यं दृश्यते तथैव त्रिलोचनाचार्यशिष्यस्य वाचस्पतेस्तात्पर्यटीकायां वार्तिकवैमत्यमपि परिलक्षितं भवति। जयन्तभट्टस्तु भाष्यमनुसरन् वार्त्तिकविरोधं समुपेक्षते।

नवीने काले तु न्यायशास्त्रस्य धारैव भिन्नतां गता बौद्धप्रतिपक्षिण अभावे मीमांसकैः सह प्रतिद्वन्द्वितां विदधतः नैयायिकाः नव्यन्यायशास्त्रमाविर्भावयाञ्चक्रुः, यस्य च प्रवर्तकः गङ्गेशोपाध्यायः नैयायिकानामग्रगण्यो वर्तते।

गङ्गेशस्य चिन्तामणिमासाद्य सम्प्रदायद्वयस्याविर्भावः अस्माभिः स्थूलदृष्टया परिदृश्यते।

मैथिलसम्प्रदायः चिन्तामणेरालोककर्तुः पक्षधरस्य मैथिलशिष्यान् रुचिदत्त-भगीरथ-मधूसूदनठक्कुर-महेशठक्कुरप्रमुखानासाद्य प्रचलितः।

अपरश्च सम्प्रदायः तस्यैव गुरोः गौडीयशिष्यान् रघुनाथशिरोमणिप्रभृतीनासाद्य प्रचलितः। अत एवालोकस्य खण्डनं दीधितौ यथा रघुनाथशिरोमणिना कृतं तथैव मधूसूदनठक्कुरेण स्वकीये कण्टकोद्धाराभिधे ग्रन्थे रघुनाथमतं खण्डितम्, मण्डितश्चालोकसिद्धान्तः सद्युक्तिभिः।

प्रस्तुतस्यान्वीक्षानयतत्त्वबोधस्य प्रणेता वर्धमानोपाध्यायस्तु न्यायशास्त्रस्य मैथिलसम्प्रदायं संरक्षति। अत एवाचार्यतया उदयनं तत्र-तत्र स्मरति। खण्डनीयतया च प्रौढगौडनैयायिकं सानार्तनि, तन्मतञ्च समुल्लिखति। अयं हि प्राचीननव्यन्यायशास्त्रयोः सन्धिकाले समजायत। अत एवैतस्य कृतिषूभयोः समावेशोऽवलोक्यते।

यद्यपीदानीं नव्यन्यायस्य मैथिलसम्प्रदायः प्रायः ह्रासतां गतः। अत एवालोकस्य, दर्पणस्य, कण्टकोद्धारस्य, चिन्तामणेः व्याख्योपव्याख्यात्मकस्य च न दृश्यते प्रचारः प्रसारश्च। वंगीयसम्प्रदायस्य ग्रन्थजातं दीधितिः, माथुरी, गादाधरी च सर्वत्र पठनपाठनादिषु समुपलभ्यते।

तथापि नव्यन्यायशास्त्रसंरक्षणपरैरनुसन्धित्सुभिश्चास्मिन् विषये दत्तावधानैर्भाव्यम्। महतः प्रमोदस्य विषयोऽयं यत् मिथिलानुसन्धानसंस्थानं दरभंगानगरे विद्यमानं मिथिलाराज्योपार्जकस्य म० म० महेशठक्कुरस्य धर्मशास्त्रीयनिबन्धैः सह चिन्तामणेरालोकस्य दर्पणाख्यां टीकां प्रकाशयति।

२. ग्रन्थकर्तृपरिचयः

मिथिलायां वर्धमाननाम्ना त्रयो विद्वांसः समभूवन्। परमेकः धर्मशास्त्रज्ञः, स्मृतिपरिभाषायाः रचयिता। अपरश्चाभिनववर्धमाननाम्ना परिचितः, परिभाषाविवेकस्य रचयिता। उभाभ्यां भिन्नोऽयं गङ्गेशोपाध्यायस्य पुत्रः, ग्रन्थस्यास्य रचयिता, नैयायिकतया लोके प्रसिद्धः वर्धमान इत्यस्माभिर्दृष्टम्।

अयं हि स्वलिखितस्य न्यायनिबन्धप्रकाशोस्योपसंहारे स्वपरिचयं स्वयमेवास्मभ्यं प्रददाति।

यस्तर्कतन्त्रशतपत्रसहस्ररश्मि—
गंङ्गेश्वरः सुकविकैरवकाननेन्दुः।
तस्यात्मजः पितुरधीत्य निबन्धमित्थं
प्राकाशयत् कृतिमुदे बुधवर्द्धमानः॥ इति।

कुसुमाञ्जलिप्रकाशेऽपि—

न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने।
गङ्गेश्वराय गुरवे पित्रेऽत्रभवते नमः॥

इति श्लोकद्वयेन गङ्गेश्वरात्मजत्वमात्मनः प्रतिपादयति।

अयं खिष्टाब्दस्य चतुर्दशशतकभव इति दिनेशचन्द्रभट्टाचार्येण "मिथिलायां नव्यन्यायस्येतिहासः" इति ग्रन्थे सूचितम्[1]।

एतेषां कृतयस्तु—

१. न्यायनिबन्धप्रकाशः।
२. न्यायपरिशिष्टप्रकाशः।
३. कुसुमाञ्जलिप्रकाशः।
४. किरणावलीप्रकाशः।
५. न्यायलीलावतीप्रकाशश्च सन्ति प्रकाशिताः।

चिन्तामणिप्रकाशः, खण्डनप्रकाशादयश्च, एतस्य सन्ति मातृकागारे सुरक्षिता इति दिनेशचन्द्रभट्टाचार्यस्य "मिथिलायां नव्यन्यायस्येतिहासः" इति ग्रन्थस्यावलोकनेन परिज्ञायते।

---

१. द्रष्टव्यः "मिथिलायां नव्यन्यायस्येतिहासः" पृ० सं० १००.१०४.

अन्वीक्षानयतत्त्वबोधस्तु न्यायसूत्रवृत्त्यात्मकः सम्पूर्णमेव विरचितोऽनेनेत्यनुमीयते। परं कृतेऽपि प्रयत्न आरम्भिक्याः त्रिसूत्र्याः व्याख्या, पञ्चमाध्यायस्याऽसम्पूर्णा व्याख्या एव समुपलब्धा; यत्र ग्रन्थगौरवादेव सम्पादने मदीया प्रवृत्तिः।

पञ्चमाध्यायस्य मातृकाद्वयं वाराणस्यां, प्रयागे च समुपलब्धम्। अत एव प्राथम्येनात्र प्रवृत्तिः। यथासमयं स्वातन्त्र्येणास्यैव त्रिसूत्रीव्याख्यानमपि प्रकाशयिष्यामीति उत्साहो विश्वासश्च हृदि वर्तते।

### ३. मूलमातृकाणां परिशीलनम्

अन्वीक्षानयतत्त्वबोधस्य हस्तलिखिता मातृका मैथिललिप्यां वाराणस्यां सरस्वतीभवनमातृकागारे सुरक्षिता वर्तते। सा प्रायश अशुद्धिरहिता वर्तते। सैव मया मूलपाठरूपेणोपरि निवेशिता। अस्यैव ग्रन्थस्य देवनागरलिप्यामन्याप्येका मातृका प्रयागे गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठस्य संग्रहालये सुरक्षिता वर्तते। सा त्वशुद्धप्राया। तस्या 'ख' इति चिह्नं दत्तम्। एतन्मातृकाद्वयमवलम्ब्य प्रकृतग्रन्थस्य सम्पादनमकार्षम्। मातृकयोः यत्र शुद्धो पाठः नोपलब्धः यत्र वा ग्रन्थपातः, तत्र मया सम्भावितः पाठविशेषः [ ] एतादृशचिह्नेन सूच्यते। टिप्पण्यां तु प्रायः पाठभेद एव सूच्यते। क्वचित् संशोधकस्याभिप्रायोऽपि निवेशितः। ईदृशेषु स्थलेषु पण्डिताः प्रमाणम्।

### ४. पञ्चमाध्याये प्रतिपाद्यविषयः

वादजल्पवितण्डास्वन्यतमां कथामाश्रित्य स्वपक्षसाधनं परपक्षनिराकरणञ्च कर्तुमिच्छतोर्वादिनोरवश्यं ज्ञातव्याः पदार्थाः न्यायदर्शने विभज्य प्रतिपादिताः। तेषु जातिनिग्रहस्थानयोः मुख्यं स्थानं वरीवर्ति। व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां दूषणाभिधानं जातिरिति कथ्यते। एतादृशदूषणं योऽभिधत्ते सः स्वपक्षमपि व्याहन्यात्। अत एव दूषणासमर्थं स्वव्याघातकं वा उत्तरं जातिरित्यनन्तरकालिकाः जातिं लक्षयन्ति। विरुद्धां प्रतिपत्तिमप्रतिपत्तिं वा सूचयदुत्तरं निग्रहस्थानमित्युच्यते।

न्यायदर्शने प्रत्यध्यायं द्वे आह्निके स्तः। तत्र पञ्चमाध्यायप्रथमाह्निके जातेः, तद्द्वितीयाह्निके निग्रहस्थानस्य च निरूपणं क्रियते। वादप्रतिवादरूपेण प्रवर्तमानासु कथासु वादिनः प्रतिवादिनश्च स्वस्वपक्षस्थापनाय न्यायं प्रयुञ्जते। उभाभ्यां क्रियमाणयोर्न्यायप्रयोगयोरवश्यमन्यतरेणाभासेन भवितव्यम्। स एव हेत्वाभासः।

केचित् तत्त्वस्थितिमन्यथयन्तः जिगीषामात्रेण चर्चां कुर्युः। तदा तेषां परिप्लवनाय छलजातिनिग्रहस्थानान्युद्भावनीयानि। तत्परिज्ञापनार्थमेव कारुणिकः सूत्रकारः लक्षणविभागादिप्रदर्शनपूर्वकं विस्तरेण जातिनिग्रहस्थानयोः विवेचनमकरोत्। एते

जातिनिग्रहस्थाने अधिकृत्य सूत्रव्याख्यानव्याजेन न्यायभाष्यकारः प्रत्येकप्रभेदं तदुदाहरणप्रदर्शनपूर्वकं निरूपयाम्बभूव। तद्व्याख्यासु वार्तिकतात्पर्यटीका-परिशुद्धिपूत्तरोत्तरं लक्षण-पदप्रयोजनादिषु सूक्ष्मतमानि विवेचनानि वर्तन्ते। उदयनाचार्यस्तावन्मात्रेणातृप्यन् न्यायपरिशिष्टनामकं पञ्चमाध्यायव्याख्यानात्मकं जातिनिग्रहस्थानविवेचनात्मकं ग्रन्थमग्रथ्नात्। तस्य न्यायपरिशिष्टस्य वर्धमानोपाध्यायेन प्रकाशाभिधानं व्याख्यानं व्यरचि। तस्य प्रकाशनं बहोःकालात् पूर्वमेव कलिकातायां समुपजातमिदानीं दुर्लभं जातम्। तस्मिन् प्रकाशे बहुविवेचनं कृतवानपि वर्धमानः वक्तव्यं ततोऽपि बहु वर्तत इति पर्यालोच्य स्वातन्त्र्येणाप्यत्र न्यायसूत्रवृत्त्यात्मके "अन्वीक्षानयतत्त्वबोधे" विचारं प्रकटितवान् इत्याभाति।

इयं व्याख्या अतीव समीचीना प्रत्यक्षरं भावमाविष्कुर्वाणा प्रतिलक्षणं पदानां प्रयोजनान्यभिदधाना उदाहरणेषु समन्वयं प्रदर्शयन्ती प्रौढगम्भीरशैलीगुम्फिता विद्यावतां मोदाय कल्पते।

तथा जातिनिग्रहस्थाने अधिकृत्य तार्किकरक्षायां वरदराजसूरिणा बहु विवेचनं कृतम्। तथा विशिष्टाद्वैतवेदान्तप्रवर्तकाचार्यैः श्रीमद्वेदान्तदेशिकैः न्यायपरिशुद्धिनामके ग्रन्थे जातिनिग्रहस्थानविषये सूक्ष्माणि विवेचनानि कृतानि। सर्वेषां तुलनात्मकदृष्ट्या अध्ययनमवश्यकर्तव्यं वर्तते। सम्प्रति प्रकाश्यमानेयं टीका जिज्ञासूनां विवेचकानाञ्च महान्तमुपकारमाधास्यतीति सुदृढमध्यवस्यामः।

## ५. कृतज्ञतानिवेदनम्

एतद्ग्रन्थसंशोधनाय कृतोपकारानधोनिर्दिष्टान् कांश्चन तार्किकप्रवरान् कृतज्ञताप्रदर्शनपूर्वकं संस्मरामि।

'तमिलनाडु' प्रदेशे 'श्रोत्रियनावल्पाक्कम्' इति भाषाप्रसिद्धे 'जम्बूपुरग्रामे' वर्तमानाः, चतुश्शास्त्रप्रवीणाः, वेदवेदान्तनिष्णाताः, वेदविहितनित्यनैमित्तिकानुष्ठाननिरताः, चतुर्वेदशतक्रतुश्रीदेवनाथताताचार्यवर्या अस्मद्गुरुचरणाः।

सम्पूर्णानन्द संस्कृत-विश्वविद्यालयस्य (वाराणसी) कुलपतय अस्मद्गुरवः श्रीबदरीनाथशुक्लमहोदयाः।

'पण्डितराजे' त्यादिबिरुदभूषिताः श्री एस० सुब्रह्मण्यशास्त्रिणः।

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये प्राचीनराजशास्त्रार्थशास्त्रविभागाध्यापकाः श्रीविश्वनाथशास्त्रिदातारमहोदयाः।

तिरुपतिस्थकेन्द्रीय-संस्कृत-विद्यापीठे प्राध्यापकपदमलङ्कुर्वाणाः डा० एन्० एस० रामानुजताताचार्यवर्याः।

अस्य ग्रन्थस्य प्रकाशनाय स्वीयां मूलमातृकाप्रतिकृतिं देवनागरलिप्यां विद्यमानां मह्यं दत्तवद्भ्यः, प्रयागविद्यापीठस्य प्राध्यापकेभ्यः डा० किशोरनाथ झा महोदयेभ्यः शुभाशंसापूर्विकां कृतज्ञतां प्रकाशयामि । बहुषु कार्येषु सर्वदा व्यापृता अपि डा० झा महोदया अस्य ग्रन्थस्य सम्पादनकर्मणि साहाय्यमकुर्वन्नित्येतदर्थमपि बहुशः धन्यवादान् वितरामि ।

इमं ग्रन्थं संशोध्य प्रकाशयितुं मदीयोत्साहवर्धका अस्मद्विद्यापीठस्य प्रधानाचार्यवर्याः डा० गयाचरणत्रिपाठिमहोदयाः सर्वदा स्वीयसदुपदेशैरुपकृतवन्तः, इत्येतदर्थमेतेभ्यः हार्दं कार्तज्ञ्यं समर्पयामि ।

सोत्साहं ग्रन्थमुद्रणं कृतवद्भ्यः नागरीमुद्रणालयव्यवस्थापकेभ्यः तत्रस्थकार्यसंपादकेभ्यश्च मदीयाः धन्यवादाः सन्ति ।

सम्प्रार्थये सर्वान् बहुविदः गुणैकपक्षपातिनः न्यायादिनिखिलशास्त्रज्ञान्, यदशुद्धिबहुलायाः मातृकायाः शोधने मदीयबुद्धिमान्द्याद्, मुद्रणावसरे अक्षरयोजकस्य प्रमादाद्वा सम्भाविता अशुद्धीः परिहृत्य ग्रन्थमिमं परिशील्य स्वाभिमतं निवेद्य कृतार्थयन्त्विति ।

३० मार्च, १९७९.

विदुषामनुचरः
के० रघुनाथन्
अनुसन्धानसहायकः
गं० ना० झा के० सं० विद्यापीठम्,
प्रयागः ।

# विषयसूची

विषयः पृष्ठसंख्या

पञ्चमाध्याये प्रथमाह्निके



पञ्चमाध्याये द्वितीयाह्निके

---

वर्द्धमानोपाध्यायविरचितः

# अन्वीक्षानयतत्त्वबोधः

[मङ्गलाचरणम्]

कथकाशक्तिलिङ्गेषु तत्त्वधीः सुधियां यतः ।
तं पञ्चममिवाध्यायमनुध्यायामि शङ्करम् ॥

[अवतरणम्]

अथ प्रथमाध्यायोपान्त्यसूत्राभ्यां जातिनिग्रहस्थानसामान्यलक्षणानन्तरं तद्विशेषलक्षणेषु कर्तुमर्हेषु शिष्याणामनन्त[०णामन्त०]रङ्गतयाऽत्यन्तबुभुत्सितप्रमेयपरीक्षा तदुपोद्घातादिसङ्गतप्रमाणादिपरीक्षाजिज्ञासया प्रति[जाति]निग्रहस्थानविशेषलक्षणजिज्ञासा मा भूत्[1], सम्प्रति प्रतिबन्धकबुभुत्सिततमप्रमेयपरीक्षा प्रमाणादिपरीक्षाजिज्ञासायाः स्वविरोधिविषयसिद्ध्याऽपगमे "तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम्" [१-२-२०] इति बहुषु तद्विशेषलक्षणेष्ववसरतः कानि तानीति शिष्यजिज्ञासायां तद्विशेषलक्षणाय पञ्चमोऽध्याय आरभ्यते ।

[ग्रन्थसङ्गतिप्रदर्शनम्]

ननु कोऽयमवसर·,[2] न तावत् प्रतिबन्धकापगममात्रं, नाप्यभिधेयान्तरप्रतिपादनानुकूलजिज्ञासायोग्यत्वविरहविमृ[शि]ष्टमुपयोगित्वम्[3] । योग्यताविरहश्च तद्विरोधीविशेष एव । नापि प्रतिबन्धकाभावविशिष्टो हेतुहेतुमद्भावः । अभिधानार्हस्याभिधानहेतुजिज्ञासा[ज्ञासया]यज्ज्ञानाद्यविषयतया वा ज्ञानमभिधानानुकूलजिज्ञासाजनकं तस्य सङ्गतित्वात्[4], प्रतिबन्धक[ा]भावस्य च स्वरूप सा[सतः]हेतुत्वात् ।

अथ सूत्रकारस्य जातिनिग्रहस्थानबहुत्वकीर्तनेनान्तरङ्गप्रमाणादिपरीक्षासमाप्त्यनन्तरं जातिनिग्रहस्थानविशेषलक्षणानि वक्ष्यामीत्यभिधेयोन्नयनात्, एतच्छास्त्रवक्तव्यस्येदानीमवचनसमाधानं कालान्तरवचनाभिप्रायकमिति व्युत्पत्तेर्नान्तरा

---

१. माह ख ।

२. अवसरलक्षणन्तु—प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तौ, अनन्तरंवक्तव्यत्वम् ।

३. अवश्यवक्तव्यत्वमित्यर्थः ।

४. [अभिधानार्हस्याभिधानहेतुजिज्ञासाजनकं यज्ज्ञानं, यद्विषयकतया ज्ञानमभिधानानुकूलजिज्ञासाजनकं वा तस्य सङ्गतित्वात् ।] इति पाठेऽधिकस्फुटसर्वप्रतिपत्तिः ।

तद्विशेषलक्षणजिज्ञासा शिष्याणां, न वा तया फलमिति प्रमाणादिपरीक्षासमाप्त्यनन्तरसमय एवावसरः। तज्ज्ञानाद्विशेषलक्षणजिज्ञासायां तदभिधानम्।

यद्वा प्रमाणादिपरीक्षावृत्ति[त्त]त्वज्ञानमेव विरोधिजिज्ञासायोग्यताविरहज्ञानमिति मतम्। तन्न। बहुत्वकीर्तनस्य तदानीं तद्विशेषलक्षणाकरणमात्रतात्पर्यकतया कालान्तर[रे]विशेषलक्षणकरणेऽपि तात्पर्यकल्पक [नि] मानाभावात्, संशयपरीक्षानन्तरं प्रमाणादिपरीक्षायामन्यत्र चानवसरापत्तेश्च। तादृशाभिप्रायोन्नायकस्याभावात्।

किञ्च, प्रतिबन्धकाभावः साधारणो हेतुरिति न सङ्गत्यन्तर्निवेशी, अनन्तराभिधानासाधारणकारणस्य सङ्गतित्वात्। ननु प्रतिबन्धकध्वंसो विवक्षितः, प्रतिबन्धकाभावस्य संसर्गाभावत्वेनैव स्वरूपसतः कार्यमात्रे साधारणहेतुत्वादिति चेन्न, तज्ज्ञानस्याप्यनन्तराभिधानहेतुत्वे मानाभावात्। प्रतिबन्धकसंसर्गाभावस्य प्रत्येकं सङ्गतित्वे गौरवापत्तेः।

नाप्यभिधानार्हस्यान्यत्राभिधान[ने]बाधज्ञानमवसरः, तस्य जिज्ञासायामहेतुत्वात्। तदभावेऽपि तदुत्पत्तिः[त्तेः]। अत एव प्रतिबन्धके[क]जिज्ञासाध्वंसे सत्यानन्तर्यं सङ्गतिः। सामान्यलक्षणानन्तरं विशेषलक्षणानां कर्तव्यत्वात्। अध्यायत्रयव्यवहितमप्यानन्तर्यमेवेत्यपास्तम्। आनन्तर्यस्य षोढा[1]सङ्गत्यनन्तर्भावात्।

अथ **तत्त्वाध्यवसाय**[४।२।५०]सूत्रेण सोपकरणयोरेव जल्पवितण्डयोः परीक्षणाद्धेत्वाभासच्छलजातिनिग्रहस्थानसामान्यलक्षणपरीक्षाऽपि वृत्तेति तद्विशेषलक्षणजिज्ञासोद्रेकाद्धेतुहे[तु]मद्भावलक्षणैव सङ्गतिः। न च च्छलेन व्यवधानम्, स्वाङ्गमव्यवधायकमिति[2] चेन्न, '**तत्त्वाध्यवसाय** [४।२।५०] सूत्रस्य परीक्षापरत्वे मानाभावात्। "**यत्र संशय**" इत्यादि[२।१।७।]सूत्रेण प्रयोजनादिवज्जल्पवितण्डयोरपि परीक्षणात्। अत एव चतुर्थाध्यायद्वितीयाह्निकोपक्रमे "षोडशापि प्रमाणादयः परीक्षिता" इति **टीका**[3]।

किञ्च, अध्यायशेषप्रकरणेनाध्यायस्य न कापि सङ्गतिः। सा ह्यर्थद्वारिका, प्रकरणार्थश्चाध्यायार्थव्यवहितः। जात्यादिविशेषलक्षणानामन्यत्रा[न]भिधानादुपयोगित्वेनावश्याभिधेयत्वादर्थादत्रोपनिपात इति चेन्न, अभिधानार्थरूपायाः[4] सङ्गतेरनभिधानात्।

---

१. सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा।
निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरुच्यते ॥ अनुमितिसङ्गतिः।

२. न्यायादित्यधिकः ख पुस्तके।

३. द्रष्टव्या न्यायवार्तिकतात्पर्यटीका (४।२।१। अवतरणभागः)

४. अभिधानाख्यरूपायाः ख।

उच्यते, प्रतिबन्धकजिज्ञासाविषयप्रमाणादिपरीक्षासिद्धिरवसरः, तज्ज्ञानात् प्रतिबन्धकजिज्ञासाध्वंसद्वारा विशेषलक्षणानुकूलजिज्ञासया विशेषलक्षणाभिधानम् । स्वविषयसिद्धेर्ज्ञाताया एवेच्छाविच्छेदकत्वात् । न च प्रतिबन्धकजिज्ञासाविषय-सिद्धिर्जिज्ञासापगममात्रे हेतुः, न त्वभिधानेऽपीति वाच्यम् । [व्यापारिणः]व्यापारे-णान्यथासिद्धावतिप्रसङ्गात् ।

यद्वा, जात्यादिसामान्यविशेषलक्षणयोर्हेतुहेतुमद्भावः, प्रतिबन्धकजिज्ञासा-ध्वंससहितोऽवसरः । न चाध्यायत्रये चिन्तान्तरेण व्यवधानान्न सङ्गतिः, न वा तदारब्धस्य साक्षात् सङ्गतत्वमिति वाच्यम् । सम्बन्धपरीक्षाव्यवहितस्य प्रमाण-विभागलक्षणादेव[दिव] संशयपरीक्षाव्यवहितस्य प्रमाणविभागलक्षणादेः संशय-परीक्षाव्यवहितप्रमाणपरीक्षायाश्च तेन साक्षात् सङ्गतत्वात् । न च हेतुहेतुमद्भाव एव सङ्गतिः, न तु जिज्ञासाध्वंसोऽपि । तस्यां सत्यां तदभावात् । वक्तव्यान्तरसमाप्तौ सत्यामवश्यं वक्तव्यतैवावसरः ।

## [ अध्यायार्थविचारः ]

कः पुनरत्राध्यायार्थः ? तत्र जात्यादिपरीक्षेति सानातनिप्रभृतयः । "जातीनां सप्रपञ्चानामि[1]"त्याद्यध्यायान्तवार्तिकात्तद्विशेषलक्षणमित्याचार्याः । लक्षणस्याध्या-यार्थत्वे प्रथमाध्यायान्तर्भावप्रसङ्गः । सदुत्तरत्वशङ्काव्युदसनैकप्रयोजन-कोत्तरसूत्रसमूहस्य च लक्षणेषू[ष्वनु]पयोगः । परीक्षापरत्वे च तानि साक्षात् सङ्गतानि स्युः । तत्सम्भवे तत्सङ्गत्यन्तरस्यान्याय्यत्वात् तस्य परीक्षा । [उभय] परत्वेऽर्थभेदेनाध्यायभेदापत्तेः । [न] लक्षणपरीक्षयोस्तुल्यवत्त्वात्[तुल्यत्वात्] पर्यायकल्पनाः, परीक्षायाः प्रधानत्वात् । तत्त्वज्ञानार्थजन्ये[र्थकत्वे]नैकार्थत्वेऽध्याय-भेदानुपपत्तेः । परीक्षापरत्वे तु निराशयपरीक्षाद्युपपत्तेः[2] लक्षणानां हेतुत्वेनोपपत्तेः । "जातीनामि"त्यादि वार्तिकस्य परीक्षाश्रयतया लक्षणकीर्तनपरत्वेनाप्युपपत्तेः । तस्मादुत्तरसूत्रवत्त्वं परीक्षापरत्वे लिङ्गम् । न च द्वितीयाह्निकाव्याप्तिः, तस्यापक्षत्वात् ।

न ह्यवान्तरवाक्यस्यातदर्थत्वम० वृत्ति[०मतद्वत्ता]वा महावाक्यस्य तदर्थता तद्वत्ताविरोधि । न च च्छलोत्तरसूत्रवता प्रथमाध्यायेन व्यभिचारः, उत्तरसूत्रवत् प्रकरणसमूहवत्त्वस्य विवक्षितत्वात्ः । न च "तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वमिति" [१-२-२०] सूत्रानारम्भः, परीक्षायाः क्रमेणैव प्रवर्तनाद्विलम्बाभावे तत्समाधानानु-

---

१. जातीनां सप्रपञ्चानां निग्रहस्थानलक्षणम् ।
शास्त्रस्य चोपसंहारः पञ्चमे परिकीर्तिताः ॥ इति न्या०वा०ता० परिशुद्धिः, अ० ५.

२. निराश्रयपरीक्षानुपपत्तेः ।

पपत्तेरिति वाच्यम् । उपयुक्तजातिनिग्रहस्थानविशेषलक्षणातिक्रमप्रवर्तितपरीक्षासु सङ्गतिसमाधानपरत्वादिति । मैवम् । लक्षणाध्यायार्थतया प्रथमपञ्चमसङ्ग[ङ्क]रे द्वितीयादित्रयस्य परीक्षार्थत्वेनैकत्वापत्तेः ।

अथ तत्तदवान्तरोपाधिभेदेनाह्निकसमूहतयाऽध्यायभेदः । तर्हि तत्तदर्थावच्छिन्नसूत्रसमूहात्मकप्रकरणसमूहरूपजातिविशेषलक्षणनिग्रहस्थानविशेषलक्षणाह्निकसमुच्चयात्मककथकाशक्तिलिङ्गविशेषलक्षणैकोपाधिसत्वादत्रापि भेदः । अध्यायस्याध्यायान्तरेऽनन्तर्भावात् । न चैवं छलस्यात्रैवान्तर्भावः, अप्रकरणार्थस्याह्निके, अनाह्निकार्थस्याध्यायेऽनन्तर्भावात् । न च छलाह्निकं पृथक् स्यात्, आह्निकत्रयेणैवायमध्यायोऽस्त्विति वाच्यम् । एकार्थावच्छिन्नप्रकरणसमूहपर्याप्तसूत्रसमूहाभावात् ।

यत्तु विशिष्टस्याध्यायार्थत्वे प्रथमाध्यायोपपत्तावपि विभज्यमानसाकाङ्क्षत्वाभावात् प्रथमाध्यायेन नास्यैकवाक्यत्वम्,[1] 'घटमानय' 'शुक्लं घटमानये' तिवदिति।

तन्न । घटानयनविशेषणत्वेन शुक्लघटानयनस्य यथा युगपत् प्रयोगादौ पौनरुक्त्यं, तथा प्रथमाध्यायार्थविशेषणत्वेन पञ्चमाध्यायस्य पौनरुक्त्यापत्तेः। तथाध्यायार्थच्छलविशेषलक्षणेऽतिव्याप्तिः । छलातिरिक्तत्वेन विशेषणेषु[०णे तु]हेत्वाभासविशेषलक्षणेऽतिव्याप्तिः । तेषामपि कथकाशक्तिलिङ्गत्वात् ।

अथाध्यायार्थस्यातिप्रसक्तत्वेऽपि तेन रूपेण तत्रैव विशेषेऽभिधानतात्पर्यम् । न हि यदवच्छेदकप्रकारो यावति स सर्वस्तस्यार्थः[2] । गाः पश्येति वाक्यस्य सन्निहितगोप्रत्यायकस्य व्यवहिताबोधकतयाव्यभिचारात् । तात्पर्यविशेषान्नियम इति तु तुल्यम् । ऊ० चार्थे [ननूक्तार्थे] सूत्रकृत्तात्पर्यं कृतिविशेषोन्नेयमिति चेन्न । तथा सति सर्वपदार्थलक्षणमात्रस्यैवाध्यायार्थत्वापत्तेः । कृतिविशेषोन्नेयतात्पर्यविशेषे नियामकत्वस्यावश्यवाच्यत्वात् । किञ्चैवं जातिसामान्यलक्षणस्यापि प्राथमिकत्वापत्तिः, कथकाशक्ति[लिङ्ग]निग्रहस्थानविशेषनिरनुयोज्यानुयोगविशेषत्वाज्जातेः ।

तस्मादेवं वाच्यम्, अनन्यपरोद्दिष्टरूपवत् कथकाशक्तिलिङ्गविशेषलक्षणं पञ्चमाध्यायार्थः। प्रथमे छलपरीक्षोपोद्धातेन तद्विशेषलक्षणकरणात् । छल[लक्षण] परीक्षयोश्च शिष्यपरीक्षायोग्या[०ग्यता०]परत्वेन टीकाकृतावतारितत्वात् । एवं हेत्वाभासविशेषाणां निग्रहस्थानत्वेनात्र [त्यक्ता]नामपि तु वक्ष्यमाणाध्याय[ये] यत्र यदा [इत्यादेः परी]क्षासु प्रचुरोपयोगितया परीक्षाप्रयोजनकत्वात् प्रमाणविशेष लक्षणम् ।

न चैवं निग्रहस्थानान्तराणामपि तत्रोपयोगात् तत्रैव विशेषलक्षणापत्तिः । द्वयी हि परीक्षा—कथारूपा, स्वयं परामर्शरूपा च । तत्र हेत्वाभासानां स्वपरकर्तृक-

१. तथाहि—एकवाक्यत्वलक्षणमाह जैमिनिः—

"अर्थैकत्वादेकं वाक्यं, साकाङ्क्षं चेद्विभागे स्यात्" ।।मी० सू० २-१-४६।।

२. स सर्वस्तस्यार्थो न भवतीति व्याप्तिः सुघटेति भावः ।

परीक्षामात्रोपयोगेन प्राधान्यात् । निग्रहस्थानान्तराणान्तु कथारूपपरीक्षैकनियमात् । एतावताऽपि जातिसामान्यलक्षणेऽतिव्याप्तिः, कथकाशक्तिलिङ्गरूपनिग्रहस्थानविशेषनिरनुयोज्यानुयोगविशेषत्वाज्जातेरिति । तदर्थमुद्दिष्टरूपवदिति । येन हि रूपेण प्रथमसूत्रोद्देशस्तेन विशेषलक्षणस्य विवक्षितत्वात् । तच्च जातिविशेषलक्षणं निग्रहस्थानविशेषलक्षणमिति द्वयम् । निरनुयोज्यानुयोगस्य तु तेन रूपेणाद्यसूत्रेऽनुद्देशः । उत्तरसूत्रवत्त्वमध्यायस्य न परीक्षापरत्वे लिङ्गम् । एकवाक्यताघटकैकरूपानिश्चयेऽध्यायत्वानिश्चयात् । यथा विशेषसंशयेऽपि मनुष्यसामान्यनिश्चयो गेहे, तथा लक्षणपरीक्षारूपैकार्थानिश्चयेऽप्येकवाक्यत्वनिश्चयादेकार्थनिश्चयोऽस्त्येव । अन्यथा प्रथमं विशेषानुपस्थितावेकार्थानिश्चये लक्षणा न स्यात् । अध्याहारेणाप्युपपत्तेरिति चेन्न, वादिविप्रतिपत्त्या तदनिश्चये[अध्या]यत्वेन पक्षत्वानापत्तेः । यत्रैकवाक्यताग्राहकं प्रथमं मानम्, तत्रैव लक्षणास्वीकारात् । उत्तरसूत्रवत् प्रकरणवत्त्वञ्चासाधारणं द्वितीयाध्यायादेः सपक्षत्वाद्व्यावृत्तेः । लक्षणानुपपत्तिनि[वर्त]कसूत्रवत्त्वं लिङ्गमिति चेन्न, स्वरूपासिद्धेः । न हि प्रत्युत्तरसूत्रैर्लक्षणेऽनुपपत्तिर्निरस्यते । छलपरीक्षासूत्रवता प्रथमाध्यायेन व्यभिचारात् । परीक्षापराध्याये व्यक्त्यादिलक्षणस्येव[1] शिष्यानुरोधेन लक्षणपरेऽप्यध्याये प्रत्युत्तरसूत्राणामुपपत्तेः । जात्युत्तरस्यासदुत्तरत्वं न पारिभाषिकमित्येतावन्मात्रप्रतिपत्तिफलकत्वात् । लक्षणानुपयोगस्येव[2] परीक्षानुपयोगस्यापि तुल्यत्वात् । द्वितीयाह्निकस्योत्तरसूत्रशून्यप्रकरणवत्त्वेनाध्यायस्यापरीक्षापरत्वसाधनात्, सत्प्रतिपक्षत्वञ्च ।

अपि च जात्यादिसामान्यलक्षणानां परीक्षाऽध्यायार्थः, तद्विशेषलक्षणानां वा ? नाद्यः, "यत्र संशयस्तत्रैव"[२।१।७] मित्यतिदेशेन प्रयोजनादिवत् परीक्षासिद्धेः, तत्राकाङ्क्षाविरहात् । नान्त्यः, तेषां विशेषतोऽनुपस्थितौ तत्रापि तदभावात् । कथञ्चिदुपस्थितावप्यतिदेशसूत्रादेव तत्सिद्धेः । किञ्च न तावत् परीक्षापरत्वं, लक्षणानुपपत्तिनिरासकसूत्रस्यानुपलब्धिबाधितत्वात् । नापि साक्षात् परम्परासाधारणं तत्प्रयोजकत्वं, सिद्धसाधनात् । प्रथमाध्यायस्यापि तत्त्वात् । कथन्तर्हि सूत्रकारो विशेषलक्षणपरीक्षामकृत्वैव विरराम । विशेषलक्षणस्या[धिक]विषयत्वेन[3] स्वप्रमाणप्रसरादेव[4] परीक्षां करिष्याम इति शिष्याकाङ्क्षाप्रतिबद्धत्वात् । अतिदेशसूत्रादेव तत्सिद्धेश्च । अत एव परीक्षां विना विशेषलक्षणानि स्वकार्यक्षमाणि, अन्यथा परीक्षादिवैफल्यादिति परास्तम् । तस्मात् यथोक्तं विशेषलक्षणमध्यायार्थः ।

अत एव 'जातीनां सप्रपञ्चानामिति' वार्तिकोपसंहारः संगच्छते । न हि परीक्षाश्रयलक्षणकीर्तनेन तदुपपत्तिः, औत्सर्गिकस्वार्थपरत्वे बाधकाभावात् । भाष्यकारोऽपि 'लक्षणन्तु'[5] इति प्राधान्येन लक्षणमवतारयति स्म ।

१. स्यैव ख ।

२. स्यैव ख ।

३. अतिविषयत्वेन ख ।

४. प्रसवादेव ख ।

५. ५-१-२, न्यायसूत्रावतरणम् ।

[जातिलक्षणनिरूपणम्]

का पुनर्जातिः ? तत्र सिद्धं दूषणासमर्थमुत्तरं[1] जातिः। तथा व्यपकृष्टमुत्तरं द्विधा दूषणसमर्थमप्यसिद्धम्,[2] सिद्धमपि दूषणासमर्थम्। आद्यं कल्पितदूष्यम्, य-[त]त्तु च्छलम्, अकल्पितदूष्यन्तु केवलनिरनुयोज्यानुयोगः। शेषं जातिरिति। न, असिद्धस्यापि दूषणासमर्थस्य जातित्वात्। यदि घटसाधर्म्यात् कार्यत्वादनित्यः शब्दो नित्यसाधर्म्यात् विभुत्वान्नित्यः किन्न स्यादिति प्रत्यवस्थानसम्भवात्।

न चासङ्कीर्णोदाहरणमात्रपरमिदम्। सिद्धस्य दूषणासमर्थस्यापि हेत्वाभासान्तरसङ्कीर्णत्वात्। न च जातिच्छलयोरेव मिथोऽसाङ्कर्यं विवक्षितम्, असिद्धस्य दूषणासमर्थस्य कल्पितदूष्यस्य छलसङ्कीर्णत्वात्। दूषणासामर्थ्यमात्रत्वं न जातिलक्षणम्, छलाभिव्यापकत्वात्, असदुक्तिव्यापनाच्च। तत्र वस्तुतो दूषणासामर्थ्यात् स्वव्याघातकमुत्तरं जातिरिति चेन्न, तद्धि न[3] स्वव्याघातकप्रतिपादकत्वं तत्र तात्पर्यम्[?]। जातिवादिनः स्वदोषाप्रतिपादकत्वात्।

अत उद्देशाः। स्वव्याघातकञ्च तस्य तज्जातीयस्य वा ? नाद्यः, व्यक्त्यभेद [ दे ] व्याघातस्यासम्भवात्। नान्त्यः, साजात्यं हि न साधर्म्यसमादित्वेन, अव्यापनात्। न जातित्वेन, आत्माश्रयात्, तस्यानिरुक्तेः। स्वासाधकत्वसाधनसमर्थोपस्थापकमन्तरं [मुत्तरं] जातिरिति चेन्न, जात्युत्तरस्य तत्रासामर्थ्यात्। स्वप्रतिपाद्यत्वोद्देश्य [ ०त्वोद्देश्यक ] दोषप्रयोजकत्वाभिमतरूपवत् प्रतिपादकवाक्यमुत्तरमिति चेन्न, सालम्बनानुमानप्रतिपक्षतयोपन्यस्ते 'निरालम्बनमिदं वस्तुत्वात्', इत्यत्रेदमनुमानमनैकान्तिकम्, अनुमानत्वादित्यत्र चोत्तरेऽतिव्याप्तेः। न च तयोर्ज्जातित्वमेव, चतुर्विंशतिजातिष्वनन्तर्भावात्।

किञ्च, समीचीन एवोत्तरे सत्प्रतिपक्षरूपे दोषप्रयोजकम [म्] सत्प्रतिपक्षत्वमस्तीत्यतिव्याप्तिः। व्याप्तिपक्षधर्मताऽन्यतरानङ्गीकारप्रवृत्तमुत्तरं जातिः। निरालम्बनत्वानैकान्तिकत्वानुमानयोः, सत्प्रतिपक्षे च तयोः पुरस्कारेणा[०ण नातिव्याप्तिरि]ति चेन्न, तदिदमसाधकं, प्रतिधर्मप्रतिभू [ह] तत्वादित्यादेस्तत्पुरस्कारेऽपि जातित्वात्। अन्यतरत्वस्य चानुविशेषणत्वात्। अङ्गवैकल्योपन्यासं विना प्रमाणदूषणोद्भावनं जातिरिति चेन्न, तद्ध्यङ्गवैकल्य [या] तात्पर्यकारो [०ल्य अतात्पर्यको] पन्यासः, [अ] तत्प्रतिपादको वा। नाद्यः अतत्परत्वेऽप्युपन्यासदोषेण जातित्वात्। नान्त्यः, अधिकोद्भावनादेरपि जातित्वापत्तेः। असाधकत्वाव्याप्येनासाधकतासाधनं जातिरिति चेन्न, असदुक्तिकाव्यापनात्। असाधकताव्याप्यत्व[त्वा]पुरस्कृतासाधकता-

---

१. समत्वम् ख।

२. समत्वम् ख।

३. 'तद्धि न' इति ख पुस्तके नास्ति।

व्याप्यादन्येनासाधकतासाधनं जातिरिति चेन्न, व्याप्त्यपुरस्कारवत् पक्षधर्मताऽपुरस्कारेऽपि जातिसम्भवे तदव्यापनात् । यत्रासाधकताव्याप्यं साधयति तदव्याप्तः [०प्तेश्च] पुरस्कृतगमकत्वौपयिकरूपविकलने स्थापनादूषणोद्भावनं जातिरिति चेत्, अर्थान्तरसङ्कीर्णजातेरव्यापनात् ।

हेत्वाभासा [स] व्यतिरिक्तो निरनुयोज्यानुयोगो जातिरिति चेन्न, तत्सङ्कीर्णजात्यव्यापनात् । जातित्वे[1] वाक्यत्वावान्तरजातिभेदः । स च जात्यन्तरवदनुगतमभि [०गताभि०] मानकः । न हि व्यवस्थापकनियतैव जातिः । तदवान्तरभेदाश्च साधर्म्यसमादय इति चेन्न, वाक्यार्थान्वियं विना वाक्ये जात्यनुदयात् । तद्धीव्यङ्ग्यत्वे तु तत्काले शब्दस्याभावात् कथं प्रत्यक्षेण तदूहः[2] । वाक्यार्थद्वारकानुगतमतेश्च तत्कल्पकत्वे तेनैवान्यथासिद्धेः ।

उच्यते । अ[स्वा]साधकताप्रयोगः[ज]करूपवता परासाधकतासाधनं जातिः । अ[स्व]व्याघातकत्वमपि तदेव विवक्षितम् । तथा हि जात्युत्तरं हि येन रूपेण स्थापनां व्याहन्ति, तेनैव यदि ००[स्वानु] मानमपि तदा [स्व] व्याघातकम् । निरालम्बनाद्यनुमानं च स्वेन रूपेण प्रतिपक्षेण सत्प्रतिपक्षतया स्थापनां दूषयति, न तु स्वेनैव स्वप्रतिपक्षभावमालम्बत इति विशेषः । प्रकरणसमस्य समानबलत्वाधिगतबोधितसाध्यविपर्यये स्वेन रूपेण स्वसाध्यासाधकत्वं समानबलबोधितसाध्यविपर्ययत्वेन हि परहन्तृत्वं समानबलबोधितसाध्यविपर्ययत्वेन रूपेण स्वात्मव्याघातकत्वं नास्ति ।

अन्ये तु निरालम्बनत्वानुमानादेरपि जातित्वम् । न च परिगणनभङ्गप्रसङ्गः । उपपत्तिसमाया आकृतिगणतया तत्रैवान्तर्भावात् । तथा हि, निरालम्बनत्वानुमानादेर्निरालम्बनत्वमेव दूषणम् । तच्च तस्य नान्यतः सिद्धम् । तथाविधसाधनानुपलब्धेरिति । तत एव तद्बाच्यम्, अतः स्वव्याघातकत्वं तत्रेत्याहुः ।

ननु जातेः शब्दात्मिकाया न कथकाशक्तिलिङ्गत्वं, वैयधिकरण्यात् । न च जातिप्रयोक्तृत्वं लिङ्गम् । तथानुद्भावनात् । जात्युत्तरमात्रोद्भावनात् । न च लिङ्गतया नास्य दूषकत्वम्, दूषणवचनस्य वा[ङ्]मात्रत्वापत्तेः । न चायमाप्तोपदेशः, वादिनोर्मिथोऽनाप्तत्वात् । न च प्रत्यक्षमेतत्, शब्दानित्यत्वे प्रमेयत्वमसाधकमिति । नापि दूषणवचनमप्रमाणमेव, अतिप्रसङ्गात् । तस्माद्व्यभिचारादयः परप्रयुक्तसाधनस्यासाधकत्वमभिव्यञ्जयन्तो लिङ्गविशेषा एव । यदनैकान्तिकं तदसाधकमिति व्याप्तेः, अनैकान्तिकञ्चेदमिति पक्षधर्मतोपसंहारा:[त्] । यद्यनैकान्तिकाद्यपि साधकमभविष्यत्, सर्वस्मात् सर्व्व[मवा]गमिष्यदित्यादितर्कसहायोपपत्तेः । अथैवं तथा प्रयोगप्रसङ्गः । न च व्याप्त्यादिप्रदर्शने दृश्यते प्रयोगः । एवं सदुत्तरेऽपि व्याप्त्या-

---

१. जातित्वम् ख ।

२. तद्ग्रहः ख ।

०[दि]प्रदर्शनमावश्यकम् । अन्यथा न्यूनापत्तेः। तस्मादनुमितिप्र[ति]बन्धकत्वमात्र-मस्तु, अमीषां ज्ञातानामनुमितिप्रतिबन्धकत्वात् । तन्मात्रञ्च पक्षधर्मतामात्रोद्भावनात् सिद्ध्यतीत्यसाधकतानुमानं व्यर्थम् ।

मैवम् । अनुमितिप्रतिबन्ध[क]वदसाधकताबुद्धेरप्युपदेश्यत्वात् । तथा चानैका-न्तिकत्वादिज्ञानादनुमितिसामग्रीविघटनेऽप्यसाधकताज्ञापनार्थं पञ्चावयवप्रयोगः कर्तव्यः । कथादशायां प्रत्यक्षादेरप्युपन्यासोऽनुमानच्छाययेत्युपगमात् ।

यस्तु कथारम्भे बाधादेव साधकत्वव्याप्तिं निराकरोति, तं प्रति तद्दूषणत्वं प्रसाध्य पञ्चावयवप्रयोगः कर्तव्यः । दूषणे तु यत्र वाद्युक्तनिग्रहस्थानावगतिः, सः निगृहीत इति समयस्थितौ तस्य कथायामपकर्षसूचकत्वे विवादाभावात्तन्मात्रमेवोप-संहर्तुमुचितम् । अन्यथाऽऽधिक्यापत्तेः ।

ननु यद्युभयवाद्यङ्गीकाराद् व्याप्त्यनभिधानमेव यत्र कृतकत्वादनित्यत्वेन व्याप्तौ वादिनोरविवादः, तत्रापि पक्षधर्मतामात्रमेवोपसंह्रियते, न दूषणानामसाध-कता व्याप्त्युपस्थितेरावश्यकत्वात् । तदनङ्गीकारे कथामात्रस्यैवाभावात् । कृतक-त्वादिव्याप्त्यनुपस्थितावपि कथाप्रवृत्तेः ।

अन्ये तु साधने यथाकाङ्क्षानुसारात्, समयाद्वा क्रमिकपञ्चावयवप्रयोगे व्युत्पाद्यता तथा दूषणेऽपि । यथा हि साधने पुरुषशक्तिजिज्ञासायां सिद्धयनुकूललिङ्गो-पन्यासे पञ्चावयवप्रयोज्यता तथा दूषणेऽपि तज्जिज्ञासायां दूष्यत्वानुकूललिङ्गोपन्यासे पञ्चावयवप्रयोज्यता किन्न स्यादित्याहुः ।

ननु हेत्वाभासानामसाधकतासाधकत्वेन सदुत्तरत्वम् । जातीनां स्वासाधकता-साधारणरूपेण परासाधकतासाधकत्वादसदुत्तरत्वम् । तत्रासाधकत्वं न तावत् पक्षे ऽसाधक[ता]ज्ञानाजनकत्वम् । तेनापि तत्त्वाज्ञानदशायां पक्षे साध्यभ्रमजननात् । कदाचिदजनकत्वं सत्वे[द्धे]तावपि नापि पक्षे सत्य[साध्य]तद्ज्ञानाजनकत्वम् । निरूपकाप्रसिद्धेः ।

न हि दूषणज्ञानदशायां भ्रमरूपाप्यनुमितिः । हेतुत्वेन ज्ञानदशायां तत्प्रसिद्ध-मिति चेन्न, सद्धेतौ सत्प्रतिपक्षतादशायां पक्षसाध्यज्ञान[1]जनकत्वादिति[2] चेत्, सद्धेतावसाधारणे, सत्प्रतिपक्षे च तत्त्वेन ज्ञानदशायां साध्यभ्रमजनकत्वात् । अज्ञाने च साध्ये[ध्य]प्रमाजनकत्वात् । व्याप्तिपक्षधर्मताऽन्यतरराहित्यमिति चेन्न, सद्धेतु-सत्प्रतिपक्षासाधारणयोरभावात्, तयोर्दशाविशेषदोषत्वात् । साध्याप्रसिद्धौ प्रकृत-साध्यव्याप्त्यप्रसिद्धेः । अनैकान्तिकाद्यन्यतमत्वमिति चेन्न, यत्किञ्चिदनैकान्तिकादित्व-स्यातिव्याप्तेः, प्रकृतसाध्यानैकान्तिकादित्वस्यासिद्धत्वेन केवलान्वयिसाधनेऽप्रसिद्धेः[3] । अंशतः सिद्धसाधनात्, साध्याविशेषादन्यतमपदस्य च व्यर्थत्वात् ।

१. ज्ञानपदेनानुमितीतरदपि ग्राह्यम्, अनुमितिप्रतिबन्धकेत्यादिना वक्ष्यमाणत्वात् ।
२. सत्प्रतिपक्षेऽव्याप्तिः, तद्दशायामपि सद्धेतौ साध्यज्ञानजनकत्वमस्त्येवेति भावः ।
३. केवलान्वय्यनुमाने पक्षे तत्त्वस्यासिद्धत्वं, विपक्षे च सिद्धसाधनादपि न साधकत्वम् ।

अथैतत्कालीनैतत्पक्षवृत्तित्वावच्छिन्नप्रतियोगिकैतत्साध्यप्रमाकरणत्वाभावोऽसाधकत्वम् । यद्वा तत्तत्काले तत्तत्पक्षविषय[त्वावच्छिन्नप्रतियोगिक]साध्यत्वाभिमतप्रमा[ऽ]जनकत्वं तत् । न च प्रतियोग्यप्रसिद्धिः । एतत्कालीनैतत्पक्षवृत्तित्वतत्कालतत्पक्षविषयत्वयोर्व्यधिकरणयोरेव प्रतियोगितावच्छेदकत्वादिति चेन्न, सद्धेतोः सत्प्रतिपक्षत्वाज्ञानदशायामपि तादृशप्रमायामकरणभावेनासाधकतापत्तेः । तादृशाभावानभ्युपगमाच्च । तृतीयलिङ्गपरामर्शस्याप्रमात्वं तदिति चेन्न । विरुद्धादौ परामर्शाभावात् । सद्धेतौ सत्प्रतिपक्षेऽसाधारणे च तत्प्रमात्वाच्च । नाप्यनुमितिहेतुभूताभावप्रतियोगिज्ञानविषयत्वं तत् । सद्धेतावपि कदाचिद्व्यभिचारित्वसत्प्रतिपक्षज्ञानस्यानुमितिप्रतिबन्धकत्वात् ।

अथानुमितिप्रतिबन्ध[क]प्रमाविषयत्वं तत् । सद्धेतौ व्यभिचारादिभ्रमः प्रतिबन्धकः । अनुमितिप्रतिबन्धक[त्व]ञ्च व्यभिचारादि, प्रमायाः तृतीयलिङ्गपरामर्शविघटनद्वारा, तुल्यबलत्वविषयतया चेति चेन्न । सत्प्रतिपक्षे विरोधयोर्वास्तवतुल्यबलत्वाभावेन तद्भ्रमस्य प्रतिबन्धकत्वात्[१] । तुल्यबलतया ज्ञायमानत्वेन ज्ञानं प्रतिबन्धकं, तच्च प्रमैवेति चेन्न । ज्ञायमानत्वज्ञानस्य प्रतिबन्धकत्वे मानाभावात् । तुल्यबलत्वज्ञानस्यैव लाघवेन प्रतिबन्धकत्वात् । सत्प्रतिपक्षेऽन्यतराङ्गवैकल्यप्रमैव प्रतिबन्धिकेति चेन्न । अन्यतरत्वस्य तदतद्वृत्तित्वात् । तदतद्वृत्तिसामानाधिकरण्येन ज्ञायमानस्यादोषत्वात् । धर्ममात्रस्य[२] व्यभिचारज्ञानादनुमित्युच्छेदापत्तेः । अन्यतराङ्गवैकल्यज्ञानोपजीव्यस्य तुल्यबलत्वज्ञानस्यैव प्रतिबन्धकत्वाच्च । अन्यथा असिद्धैकपरिशेषापत्तेः[३] ।

अथानैकान्तिकादिज्ञानस्य तत्तदनुमितिप्रतिबन्धकत्वमसाधकत्वम् । तथा हि—इदमनैकान्तिकज्ञानं, एतत्साध्यवत्तयैव तत्कालवतस्तत्पुरुषस्यैतत्पक्षकानुमितिप्रतिबन्धकम्, एतदनैकान्तिकज्ञानत्वात्, एतदन्यतज्ज्ञानवदिति चेन्न, तत्साध्यवत्तयैतत्पक्षकानुमितेः कदाचिल्लिङ्गभ्रमात् प्रसिद्धावप्येतत्कालवतो[त]स्तत्पुरुषस्य तादृशानुमितिः[४][तेः]अप्रसिद्धेः । नापि समीचीनसाध्यप्रत्ययाजनकत्वं तत् । वह्निमति बाष्पे[५] धूमभ्रमादग्न्यनुमितेः समीचीनत्वात् । न चान्य एव वह्निस्तत्र भासते । मानाभावात् । तद्वह्नेः[६] प्रत्यभिज्ञानात्; एकव्यक्तिके[७] तदसम्भवाच्च ।

---

१. अनुमितिप्रतिबन्धकप्रमाविषयत्वं नास्तीति भावः ।
२. तत्तदनुमित्यनिवेशात् धर्ममात्रस्य व्यभिचारज्ञानमस्त्येवेति भावः ।
३. सर्वत्रासिद्धस्यैव हेत्वाभासत्वमापद्येतेति भावः ।
४. यादृशस्थलविशेषे तथाविधाऽनुमितिरप्रसिद्धा तत्राव्याप्तिरिति भावः ।
५. पर्वते इति शेषः । बाष्पं धूमं ज्ञात्वा वह्निमति पर्वते पर्वतो वह्निमानित्यनुमितिर्जाता, तत्रेत्यर्थः ।
६. पर्वतीयवह्नेस्तत्र प्रत्यभिज्ञानादिति भावः ।
७. एकव्यक्तिसाध्यके व्यक्त्यन्तरस्यासम्भवात् ।

सा[1][ऽ]नुमितिर्लिङ्ग[ा]विषयत्वाद्भ्रम इति चेन्न, अनुमितौ लिङ्गज्ञाने[2] मानाभावात् ।

किञ्च. भावोऽभावोऽत्र उभयथापि प्रमेयमिति सत्यानुमितौ भावत्वाभावत्ववति[3] प्रमेयत्वभाने तयोरेकताभावादसत्यानुमितिः[4] स्यात् । तत्रान्यतरत्वं लिङ्गमिति चेन्न । तद्व्याप्तिमविदुषोऽप्यनुमितेः, व्यर्थविशेषणत्वाच्च ।

अथाभासे लिङ्गव्यक्तिव्याप्याभेदः प्रतीयते । तथा च वह्नौ तादृशलिङ्गबाध[व्याप]काभेदोऽपि भासते । अन्यथा आभासस्यैव वह्निव्याप्यत्वाप्रतीतेः । एवञ्चाभासलिङ्गव्यापको वह्नित्वेनाभासत इति सानुमितिः ००[अस]त्येति चेन्न । वह्निव्याप्यालोके धूमत्वारोपाद्यत्र वह्न्यनुमितिस्तत्रासिद्धभेदे सत्यत्वाभावापत्तेः । आलोक [के] व्यापके [च] धूमव्यापकाभेदात् ।

अथ लिङ्गमनुमितौ भासते । नियमतः पक्षधर्मताज्ञानविषयत्वान्नियमेनानुमितिहेतुविशेषणज्ञानविषयत्वाद्वा पर्वतत्ववत्, साध्यवच्च । किञ्चैकविशेषणवत्वेन ज्ञाते विशेषणानन्तर[०णान्तर] धीसामग्रीत एव विशिष्टवैशिष्टचभानमिति ।

नन्वेवमनुमितौ व्याप्यवत्त्वभानेऽनुमित्यविच्छेदः[5] । न च फलीभूतानुमित्यपेक्षया न्यून[6]विषयस्यैव परामर्शस्यानुमितिहेतुत्वम् । गौरवात् । नापि विषया[न्य]न्तरसञ्चारानुमितिः[7] । परामर्शस्य चरमकारणत्वात् । प्रत्यक्षादिसामग्रीतो बलवत्त्वाच्चेति चेन्न, सिद्धसाधनात्, तद्विच्छेदात् । यद्यप्येवं लिङ्गांशे[अ]प्रमात्वेऽपि साध्यांशे प्रमात्वात् कथं सिद्धसाध्यकत्वम् । तथाप्युक्तरूपासाधकत्वमस्त्येवेति ।

अस्तु तावदेवं, तथापि देवादित्य[द्य]त्र धूमसत्वमपि तत्र तदंशेऽप्यनुमितेः सत्यता, तत्र का गतिः । अथार्द्रेन्धनप्रभवो वह्निः धूमव्यापको,[8] न, व्यापकत्वादन्योऽपि तथा, तेन विनापि धूमवत्त्वात् । तथा च बाष्पे धूमभ्रमाद् धूमव्यापको वह्नि-

---

१. हेतुज्ञाने लिङ्गविषयकत्वाभावात् सा भ्रम इति चेन्न । लिङ्गविषयकं ज्ञानं न कारणमिति भावः ।

२. लिङ्गभाने इति सम्यक्

३. हेतुज्ञानस्य भावत्वाभावत्वाविषयकत्वादिति भावः ।

४. धूमाभासः पर्वते वर्तते, तत्र वह्निर्नास्तीति भावः ।

५. अनुमित्यवच्छेदः क, व्याप्यस्यानुमितावपि भानात् पुनरप्यनुमितिः, एवं सर्वदाऽनुमितिरिति भावः ।

६. वह्निव्याप्यधूमस्यापि विषयत्वान्न न्यूनविषयता ।

७. सञ्चारान्नानुमितिः ख,

८. आर्द्रेन्धनप्रभवादन्यो न धूमव्यापकः, तेन विनापि धूमवत्त्वात् धूमेन व्यापको भाति, स आर्द्रेन्धनप्रभवो न पर्वते बाष्पवतीत्यनुमितिरसत्येति भावः ।

र्भासते। स च तत्र नास्त्येवेति न साऽनुमितिस्सत्येति चेन्न, दैवाद्धूमसत्त्वेऽपि सत्यत्वादिति।

अत्रोच्यते। अज्ञानदशायां[1] पक्षे साध्यज्ञानाजनकत्वमसाधकत्वम्। तथा हि, विरुद्धत्वादिज्ञानदशावत्ता [त्तदा[2]] दि, पक्षे साध्यज्ञानाजनकं विरुद्धादित्वात्, सम्प्रतिपन्नवत्। पक्षविशेषणमहिम्ना तत्तद्दशायां पक्षे साध्यज्ञानाजनकत्वं सिद्ध्यति। बाधितादावपि[3] लिङ्गत्वभ्रमात् पक्षे साध्यज्ञानजनकत्वमिति न प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिः।

यद्वाऽनुमितिप्रतिबन्धकतावच्छेदकरूपवत्त्वमसाधकत्वम्। तथा हि, इदमिदानीमनुमितिप्रतिबन्धकतावच्छेदकरूपवत्, अनैकान्तिकत्वात्,[4]...............[सम्प्रतिपन्नवत्]। अनुमितिप्रतिबन्धकतावच्छेदकञ्च रूपं ज्ञाने विषयतयाऽनैकान्तिकत्वादिकमेव। न च साध्याविशेषः, उपाधिविशेषस्यानुमेयत्वात्। तोयत्वेन पिपासोपशमनसमर्थतावच्छेदकरूपवत्त्वानुमानवदित्यस्मदाराध्यचरणाः।

सम्प्रदायविदस्तु—अनैकान्तिकबाधितविरुद्धेषु व्याप्यत्वाभावो व्याप्यत्वसिद्धेऽनैकान्तिकत्वं, स्वरूपासिद्धम [°द्ध सत्] सत्प्रतिपक्षासाधारणेषु दशाविशेषेऽनुमितिप्रतिबन्धकज्ञानविषयत्वमसाधकत्वम्। न चानैकान्तिकोऽसाधक इति सहप्रयोगानुपपत्तिः। तत्राव्याप्यत्वस्यासाधकशब्दार्थत्वात्। असाधकत्वाननुगमेऽपि हेत्वाभासत्वमनुगतमेव। यज्ज्ञानमनुमितिप्रतिबन्धकं, तस्यैव हेत्वाभासत्वादित्याहुः।

## [ सत्प्रतिपक्षदेशनाभासप्रकरणम् ]

तदिह जातिविशेषलक्षणं प्रथमाह्निकार्थः।

सप्तदश चात्र प्रकरणानि। तानि यथास्थानं वक्ष्यते [न्ते]। तत्राद्यं विभागसूत्रेण सह त्रिभिः सूत्रैस्सपक्षसाधर्म्यविपक्षवैधर्म्यमात्रान्यतरगमकत्वप्रयोजकत्वपुरस्कारेण सत्प्रतिपक्षदेशनाभासप्रकरणम्।

ननु सकलजातिविशेषलक्षणानुकूलस्य विभागसूत्रस्यात्रान्तर्भावे प्रकरणान्तर्भावः स्यादविशेषादिति चेन्न, प्रकरणान्तर्भूतस्यैवोत्तरत्वो[त्रो]पयोगाविरोधात्।

---

१. सुज्ञान ख, स्वज्ञानेति

२. विरुद्धज्ञानदशायाम् हेतुः पक्षे साध्यज्ञानाजनकः विरुद्धत्वात्, इति भावः।

३. नित्यदोषस्थल आह बाधितेति।

४. मत्त्वत्तवत् ख।

जात्यन्तरविभागोद्देशस्याप्येतदनुकूलत्वादत्र सङ्गतत्वात् । तदाकाङ्क्षानुवृत्तौ साधर्म्य-समलक्षणानवतारात् । तत्र प्रागुक्तजातिसामान्यलक्षणानन्तरं किय[न्तो]त्यन्तास-ङ्कीर्णोपाधिसत्य [धयः] इति जिज्ञासायां विशेषलक्षणावतारानुकूलजिज्ञासाप्रयोजकं विभागोद्देशसूत्रम् ।

**साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्ग-प्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धि-नित्यानित्यकार्यसमाः ।५।१।१।**

लाघवाय द्वन्द्वः समासः । स च सर्वपदार्थप्रधान इति दूषकतायां परस्परान-पेक्षत्वं सूचितम् । लक्षणसूत्रोपस्थापितलक्ष्यानुसारेण विग्रहः । समशब्दः प्रत्येकम-भिसम्बध्यते । समशब्दार्थश्च वादिनोस्तुल्यता । जात्युत्तरस्य स्थापनादूषकत्ववत् स्वस्यापि दूषकत्वादिति जातीनां साधारणं दूष[क]त्वबीजं स्वव्याघातकत्वं सूचितम् ।

यद्वा स्थापनायाः समीकरणाभिप्रायस्य जातिप्रयोगकारणत्वात् साम्यापादन-नियतबुद्धिपूर्वप्रयोगत्वं जातीनां व्यञ्जितम् । अन्यथा सदुत्तरापरिस्फूर्ताविहमेवापकृष्टः स्यामित्यभिप्रेत्य तत्प्रयोगात् । एतेनोक्तिसम्भवोऽपि दर्शितः । असाधारणं तु दुष्ट-ताबीजं प्रत्युत्तरसुत्रेषु सूत्रकार एव वक्ष्यति ।

न चान्वर्थसंज्ञानिरुक्तेरेव तत्तद्विशेषलक्षणसिद्धौ तदर्थकसूत्रवैयर्थ्यम्, साधर्म्य-रूपं स्वव्याघातकमुत्तरं साधर्म्यसम इत्यादेः सर्वत्र सुलभत्वादिति वाच्यम् । साधर्म्या-दीनां साधारण्येन तत्तद्विशेषोपस्थित्यर्थं स्थानकरणादिप्रतिसन्धानार्थञ्च पृथग्विशेष-लक्षणारम्भात् । का[क]रणादिज्ञाने सत्यूहापोहाभ्यासपाटवातिशयेन परप्रयुक्तजाति-प्रतिषेधे सदुत्तरापरिस्फूर्तौ स्वयं परिग्रहे च सौकर्यात् । तत्र सर्वत्र प्रत्यवस्थान-प्रकारेषु साधर्म्यवैधर्म्योपस्थिते.....................[1]। तद्विशेषज्ञाने च तत्सामान्यज्ञान-स्योपजीव्यत्वात् ।५।१।१।

तत्रापि तद्व्यतिरेकगर्भत्वाद्वैधर्म्यस्य पश्चाद्भावे तयोर्लक्षणाय सूत्रम् ।

**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्य-समौ ।।५।१।२।**

यद्यपि यथाश्रुतं सूत्रमगमकम्; साधर्म्यवैधर्म्यसमादित्यस्य विधेयस्योद्देश्या-काङ्क्षायाः, वाक्ये च क्रियापदमन्तरेणापर्यवस्यति, तदपेक्षायाः, तद्धर्मोपपत्तेरिति विशेषणपदस्य विशेष्याकाङ्क्षायाश्च सत्त्वात् ।

---

१. समादौ, समादिहेतौ वा, तद्धर्मविपर्यये वा ।

तथापि प्रथमाध्यायोपान्त्यसूत्र [१-२-१८] स्थं प्रत्यवस्थानपदमनुवर्तनीयम्। न च [अध्यायत्रयेण] व्यवधानम्, एकवचनान्तस्य तस्यान्वयायोग्यत्वं वा। विभागार्थं तदुपस्थितेरावश्यकत्त्वेनाव्यवधानात्। पदस्वरूपानुवृत्तौ योग्यद्विवचनाध्याहारेणान्वयात्। न चैवं 'प्रत्यवस्थाने' इत्यस्यैवाध्याहारः स्यात्। शुद्धप्रातिपदिकोपस्थितौ द्विवचनमात्राध्याहारे लाघवात्।

यद्वा 'प्रत्यवस्थानम्' इत्येकवचनान्तस्यैव विशेषेऽन्वयः। आवृत्त्या च वैधर्म्यसमेऽप्यन्वयः। साधर्म्येण वैधर्म्येण चोपसंहारे 'स्थापनायां सत्यां' इति विषयनिर्देशः[1]। तावन्मात्रञ्च सर्वजातिसाधारणमिति साधर्म्यवैधर्म्याभ्यामित्यावर्तनीयम्। तथा च साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमिति लभ्यते। न च सामान्यलक्षणस्थं तदप्यनुवर्तनीयम्। अनन्यगत्या तथा स्थापनात्। न च मानान्तरेण तथा स्थापनायां जात्युत्तराव्याप्तिः। कथायां सर्वेषामेव मानानामत्र मानच्छाययैवोपन्यास इत्यननुगमात्। उपसंहार इत्येव विषयनिर्देशे साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थाने इत्यन्वयः। तद्धर्मविपर्ययोपपत्ते रित्यत्र तच्छब्देन प्रागुक्तसाधर्म्यवैधर्म्यपरामर्शे स्वरूपासिद्धिदेशनाभासे इमे जाती स्याताम्। वक्ष्यमाणपंक्त्या च सत्प्रतिपक्षदेशनाभासे इमे इत्ये०[व]। इत्युपसंहार धर्मोपस्थितस्य साध्यस्य परामर्शः। एवमपि तद्धर्मविपर्ययोपपत्तेरिति पञ्चमीनिर्देशे बाधदेशनाभासे इमे स्यातामिति। तत्पदं षष्ठ्यन्तं प्रमाणान्तरात् म प्रति[2]······देशनाभासत्वे ज्ञाते सम्बन्धत्वेन तादर्थ्यस्य षष्ठ्याभिधानम्। तादर्थ्येन तु रूपेण तदभिधेयत्वे चतुर्थ्येव स्यात्। टीकायाञ्च कृति पदपूरणेन षष्ठ्येव द्योत्यते। न तु तादर्थ्यवाचि कृतिशब्दाध्याहारः, गौरवात्। गत्यन्तरस्मृतैव तादर्थ्यरूपता वाक्यार्थबुद्धौ विषय इत्यस्य शब्दाध्याहारप्रस्तावे निरासात्। तस्य साध्यस्य विपर्ययो व्यतिरेकस्तदुपपत्तिः सत्तावगतिः। आवर्तितपदेन साधर्म्यवैधर्म्यसमाविति लक्ष्यपदस्य यथासंख्यमन्वयः। तादर्थ्यमात्रेण[3]······[तदभाव] सिद्धि पर्यन्तस्याविवक्षया सत्प्रतिपक्षदेशनाभासत्वं सूचितम्।

यद्यप्युद्दिश्यप्रत्यवस्थानपदपुरस्कारे नपुंसकत्वं, जातिविशेष्यत्वे स्त्रीलिङ्गं सूचितम्। तथापि साधर्म्यवैधर्म्यसमौ प्रतिषेधावित्यन्वयात् पुल्लिङ्गनिर्देशः। निरनुयोज्यानुयोगविशेषतया जातेः प्रतिषेधरूपत्वात्। तेन प्रत्यवस्थानस्य स्वपक्षस्थापनापरपक्षप्रतिषेधात्मकतत्वा [त्] ०० [द्विती]यसूत्रभागस्य स्थापनासाधारण्येप्युत्तरकक्षापातिता लभ्यते। यद्यपि जातिपदं संज्ञात्वात् 'क्तिच् क्तौ च संज्ञायाम्' [पा० सू० ३।३।१७४।] इति सूत्रेण क्तिच् प्रत्ययान्तं पुल्लिङ्गमेव युक्तमिति नाध्याहारापेक्षा। तत्राप्या······तत्राप्यनुवर्तते। प्रकृते च नाशा······इति न तत्सम्भवः। अतएव

---

१. निमित्तनिर्देशः

२. प्रतिबद्धच ख।

३. प्रत्यवस्थानासिद्धि इति स्यात्।

भाष्यकृता 'ताः खल्विमाः जातय' [५।१।१।] इत्यभिधानात्। वार्तिककृतापि जातेः संक्षेपेणोक्तावा [५।१।१] इत्यभिधानात्।

पूर्वेषामाचार्याणां क्विन्नन्तमेव जातिपदमनुगतमिति तदनुरोधादध्याहार एव युक्तः; प्रागुक्तप्रकरणार्थविच्छेदकैकरूपलाभाय लक्ष्यपदे समासः। यथाश्रुत सूत्राद्विशेषलक्षणस्य सदुत्तरप्रकरणसमे गतत्वेऽपि जातिसामान्यलक्षणादेव तन्निरासः। अतएव जातिसामान्यलक्षणनिष्कर्ष इहैव कृतः, शिष्याणां सामान्यतो विशेषतश्च जात्यवगमे सामग्र्युत्पत्तेः। प्रकरणसमस्य च यथा न स्वव्याघातकता तथोपपादित-मधस्तात्। तेन साधर्म्यमात्रप्रयुक्तगमकत्वपुरस्कारेण सत्प्रतिपक्षेण प्रत्यवस्थानं साधर्म्यसमः। तद्वैधर्म्यमात्रप्रयुक्ततद्व्यतिरेकपुरस्कारेण वैधर्म्येण सत्प्रतिपक्षतया प्रत्यवस्थानं वैधर्म्यसम इति लक्षणे। एवं प्रत्यक्षाणामपि [प्रत्येकलक्षणानामपि] प्रतिबोधः संगृह्यते। साधर्म्यवैधर्म्ययोरेव साक्षात्परम्परया चाकारणत्वस्य विवक्षितत्वात्।

यद्वा साधकसाधर्म्येण तत्साधकत्वपुरस्कारात् साध्यव्यतिरेकोपपादनात् सत्प्रतिपक्षापादनं वैधर्म्यसमः। अप्रयोजकविवक्षान्वयिधर्मदलनं कारणमाद्यायाः, अप्रयोजकसपक्षव्यतिरेकिधर्मवत्त्वदलनं कारणं द्वितीयाया भवति। यद्यपि प्रयोजकधर्म द [?] [०र्मज्ञा०] ज्ञानादपि जातिप्रयोगः संभवति, तथापि तस्य प्रयोजकत्वापुरस्का-रादप्रयोजककोटिप्रवेश एव विवक्षितः। प्रत्येकञ्चैते द्विधा जाताः, सद्विषये वा [ऽ] सद्विषये च। अन्या[०न्यथा०] पि द्वेधा, असदुक्तिकतदन्यभेदात्। [असत्] विषय-स्थापना असदुक्तिकयुक्तिमात्रदोषादेव दुष्टम् [।], न तूच्यमानगतात्। स तु गमक [त्वे त्व]सम्पन्न एव, ताद्रूप्या[०प्यपुर०]पुरस्कारात्। सद्विषया तु नासदुक्तिका स्थापनाऽसम्यक्त्वे तद्दूषणासम्यक्त्व [स्या]प्यावश्यकत्वात्।

तत्राद्योदाहरणम्—शब्दोऽनित्यः कृतकत्वात्, घटवदिति स्थापनायामस्य ल [त] त्वान्नित्याकाशसाधर्म्यान्नित्यः किन्नाविशेषादिति साधर्म्यसमे। अनित्यघट-वैधर्म्यादस्मादिव नित्यो भवत्विति वैधर्म्यसमे। द्वितीयोदाहरणम्—आत्मा क्रियावान् क्रियाहेतुगुणवत्त्वात्, इत्युपसंहारे ति भूत्वा[?] निष्क्रियाकाशसाधर्म्यादक्रिय एवास्त्विति साधर्म्यसमे। अस्मादेव सक्रियवैधर्म्यान[द]क्रियोऽस्त्विति वैधर्म्यसमे। तृतीयोदाहरणम्—शब्दो नित्योऽस्य शब्दत्वादिति, उपसंहारे प्रत्यक्षत्वादनित्यसाध-र्म्यादनित्यः किन्न स्यादविशेषादिति साधर्म्यसमे। अस्मादेवाकाशवैधर्म्यादनित्यो ऽस्त्विति वैधर्म्यसमे। एवमत्रैव वैधर्म्येणोपसंहारे।

अथ यथा साधर्म्यवैधर्म्येऽनादृत्य प्रकरणसमैवैकैव [०मैकैव]जातिः, तथा तेऽनादृत्य प्रतिधर्मसमैकैव किन्न स्यात्। धर्मान्तरेण तद्धर्मविपर्ययोपपत्तेः प्रत्यवस्थानं प्रतिधर्मसम इति लक्षणात्। तद्विशेषौ साधर्म्यवैधर्म्यसमौ, जातित्वसाक्षाद्व्याप्यदूष-कत्वोपाधीनां विभागात्। स च प्रतिबन्धकत्वाद्यवेति केचित्।

तन्न, प्रतिबन्ध[क]धर्म धर्मत्वमेव विरोधप्रयोजके साधर्म्यवैधर्म्येऽनादृत्य न गृह्यत इत्युपजीव्यत्वादनैकान्तिकवद्भेदेनोपन्यासात् । किञ्च परस्परासंकीर्णैक [०र्णैरु०] रुपाधिभिरियं जातिर्विभजनीया ।

ते च यद्यन्येऽपि भवन्ति, तथापि न दोषः । न हि यावन्तस्तादृशा उपाधय-स्तावन्तोऽस्माभिर्वाच्या इति नियमः । किन्तु [अ]संकीर्णैरुपाधिभिरियं विभजनीयेति कथं प्रकरणसमाया अनयोर्भेदः । तत्रेयं बाधदेशनाभासा । तद्धर्मविपर्ययोपपत्तेरिति वचनात् । दूष्यस्य हेतोरयं साध्यो धर्मस्तद्विपर्ययोपपादनादित्यर्थात् । सा सत्प्रतिपक्ष-देशनाभासा प्रक्रियासिद्धेरिति वचनात् । प्रक्रिया प्रक्रियमाणोऽर्थो दूष्यसाधनसाध्यप्रत्य-नीकपक्षः, तत्सिद्ध्यर्थं प्रत्यवस्थानादित्यर्थात् । अगृह्यमाणतुल्यविशेषतुल्यबलत्वा-वगतसाधनाश्च[०नाभासे]तात्पर्यात् । एवञ्च मानान्तरबाधदेशनाभासोऽपि संगृहीतः स्यात् । साधर्म्यवैधर्म्याभ्यामुपसंहारे कृते तद्धर्मविपर्ययोपपत्तये येन केनचिन्मानेन प्रत्यवस्थानमित्यत्र तात्पर्यात् । ततश्च साधर्म्यवैधर्म्याभ्यामित्य-स्यावृत्तिरपि न भवति । यदि च प्रकरणसमाबाधदेशनाभासा स्यात्तदा तत्सूत्रस्थोभय-साधर्म्यादिति पदपुरसा[स्कारा]दनुमानमात्रोपनयनान्न तत्संग्रहः स्यादित्येके । [प्रत्युत्तरसूत्र][1] पर्यालोचनया वैपरीत्यमित्याचार्याः ।

इह हि प्रत्युत्तरसूत्रेऽविशेषप्रकारेण प्रा[प्र]वृत्तस्य विशेषोपदलनमुपालम्भौ-पयिकं स्यात् । न च बाधदेशनायामविशेषपुरस्कारः । सत्प्रतिपक्षदेशनाया एव ताद्रूप्यात् । तत्र च प्रत्यन्तरसूत्रे प्रतिसाधनस्य धर्म आपाद्यः, आपादकञ्च पराभ्युपगतं वाच्यम् । तच्चात्र जन्य[त्वहेतु]बलस्य बाधकम् । तदत्र पराभ्युपगमः कथमुन्नेयो यदि नासौ प्रतिवादी तथाविधेन प्रतिसाधनेन साधनं प्रतिबाधेतेति । किमत्र तदुत्तर-प्रत्युत्तरसूत्रयोरनन्यथासिद्धेः । तथा हि तुल्यबलमपि यदि बाधकम्, तदा स्थापनयैव किन्नोत्तरं बाध्यत इति प्रकरणसमप्रत्युत्तरसूत्रतात्पर्यम् । तच्च प्रतिसाधनसद्भाव-मात्रवादिनं प्रत्यनुक्तोपालम्भः ।

अथ विपरीतबोधपरमेव बाधमास्थाय सत्प्रतिपक्षतां प्रतिज्ञाय प्रतिसाधन-मुपन्यस्यति वादिन्येवमुच्यते, यदि सत्प्रतिपक्षत्वात् साधनमसाधनम्, तदा स्थापना-प्रतिरूपत्वं प्रति मानमप्यसाधकमिति केचित् । न मिथो विरोधाद्वे[त्यत्र द्वयोरेकः] विनिर्ये[निर्णीये]त इति मन्यमाने प्रतिज्ञातसत्प्रतिपक्षत्वे वादिनि तादृशप्रसञ्जनस्ये-ष्टापादनत्वात् । अत्रत्यप्रत्युत्तरसूत्रे च विशेषप्रदल[र्श]नात् तुल्यबलत्वापवादेन सत्प्रतिपक्षत्वस्योद्धारः । तुल्यबलत्वोपगमेऽपि विशेषं दर्शयिष्यामीत्यभिसन्धाय बाधाभिधानमिति चेन्न, समानबलेनाभिधायिनो व्याघातमुपेक्ष्य विशेषदर्शनस्यान्या-य्यत्वात्.................[व्याघा] तस्योपेक्षानर्हत्वात् । तद्भट[तदुद्भटत्वं चेति तदुद्भवे वा]त्वञ्चोभयवाद्यनुम[त]त्वमेव । समानबलेन बाधाभिधायिनो व्याघातस्यो-भयसाध्यत्वात् । विशेषस्य च व्युत्पाद्यत्वात् ।

---

१. प्रत्युत्तरक्षेत्र ख,

न च वक्ररुचेर्नेदमनिष्टम्। पर्यनुयोज्योपेक्षणापत्तेः। परसिद्धतद्दोषसम्भवे तदसिद्धतदुक्तबलस्यानौचित्याच्च। निग्रहस्थानानन्तरं सम्भवे व्याघातस्यैवोद्भाव्यत्वमित्याकारसमयसंप्रतिपत्तिरेव वोद्भटत्वम्। न च लक्षण[त]स्तत्र[1] सूत्रे तद्धर्मविपर्ययोपपत्तिप्रक्रियासिद्धिपदयोः स्वरसेन वैपरीत्यम्। तादर्थ्यषष्ठ्या दूष्यसाधनसाध्यप्रत्यनीकधर्म्मोपपत्तिमात्रार्थतया प्रक्रियमाणप्रत्यनुमानवादिपक्षमात्रसिद्धिपरतया च तयोर्व्याख्येयत्वात्। प्रमाणान्तरबाधसंग्रहानुरोधाच्च। प्रकरणसमस्य हि बाधदेशनाभासत्वे प्रकरणसमसूत्रे साधर्म्यपदमात्रमहिम्नानुमानात्। प्रतिबो[रो]धलाभेऽपि मानान्तरेण प्रतिरोधः कथं ग्राह्यः। साधर्म्यपदस्य मानमात्रोपलक्षणत्वमास्थायेति चेत्, न, तर्हि बाधदेशनाभासत्वेऽपि तदनुपपत्तिः। तथा हि नयनपित्तान्तरितमितिमानं [?] शङ्खमुपलभ्य शुक्लोऽयं शङ्खत्वात्, इतरशङ्खवदिति प्रयुक्तेः, न तथा प्रत्यक्षतः, पीतस्यैवोपलब्धेः। न चेदं बाधकमनुमानमपि न साधकम्। प्रमाणत्वेनाविशेषात्। तथा प्रतिरोधेनापि प्रत्य[व]तिष्ठते। यथा[ह्यनु]मानाच्छुक्लः, तथा प्रत्यक्षात् पीत एवायं किन्न स्यात्। एवं न चास्ति। शुचि [नरशिरः कपालं] प्राण्यङ्गत्वादित्युक्ते प्रत्य[व]तिष्ठते।

यद्यनुमानाच्छुचि तदागमादशुच्येव किन्न स्यात्, अविशेषात्। तथेयं व्यक्तिर्न्नं गवयपदवाच्यो[च्या]व्यक्तित्वात्, गोव्यक्तिवदित्युक्ते, यद्युपमानेन प्रत्यवतिष्ठते। यद्यनुमानादवाच्या तदानवगतसंगति[केतक]गवयपदसमभिव्याहृतवाक्य विषयत्वात्तद्वाच्या किन्न स्यादिति विशेषात्। न च मानान्तरेण प्रतिरोधस्तुल्यबलत्वादित्यतत्त्वसाध्याभावबोधकत्वादेर्दूषकतादिबीजस्यानुमान[नासाम्यात्]स्यात्। प्रत्यक्षादीनां लिङ्गत्वेन कथायामनुपयोगाच्च। प्रत्यक्षत्वादेराभासत्वात्तेन प्रतिरोधे केवलनिरनुयोज्यानुयोगः स्यात्। तथा च न जातिः स्या स्त [०त्त] द्विषयत्वेऽपि केवलतदसंकीर्णत्वादिति चेन्न, प्रकरणसमापि हि तर्हि किं प्रमाणमात्रप्रतिरोधदेशनाभासाऽनुमानमादायेति चेत्, तदप्याभासमनाभासं वा। आद्ये कथं जातिः, केवलनिरनुयोज्यानुयोगत्वात्। अन्त्ये[2] अन्तरेऽपि तुल्यम्। अनाभास एव, तर्हि प्रतिरोधः प्रत्याक्षादिभिरुदाहरणोक्तरूप इति चेन्न, जातित्वप्रयोजकरूपवत्तया तथाभावस्याभासानाभाससाधारण्यात्।

यदि च केवलनिरनुयोज्यानुयोगरूपतया प्रत्यक्षाभासादिना प्रतिरोधेन[3] प्रत्यवस्थानं जातिरिति न प्रकरणसमसूत्रन्यूनता। तर्हि तेन बाधनादेशनाऽपि तथै०[वे]ति समोऽसंग्रहः[4] [संग्राह्यम् ?]। तस्मादियं सत्प्रतिपक्ष एवानैकान्तिक-

---

१. 'तत्र', ख पुस्तके नास्ति।

२. अन्यो ख।

३. बोधेन ख।

४, संग्रहम् क।

वाचो युक्तिः। तदनयोः साधकसारूप्यासाधकवैरूप्ययोर्दर्शनं द्वारम्। स्थापनाहेतुर्दूष्यः, सत्प्रतिपक्षत्वमारोप्यम्। वादिमध्यस्थयोः तद्भ्रान्तिः फलं कारणयुक्तम्। अबुद्धिपूर्वकप्रयोगे प्रमादो, बुद्धिपूर्वे प्रतिभाक्षये, मयि वदति कः शक्त इति स्वप्रौढिरिति [०प्रौढिचिख्या०]ख्यापयिषा वाऽवसरः। दुष्टत्वमूलन्तु साधारणम्। नानारूपो वक्ष्यमाणो व्याघातः। असाधारणमत्र युक्ताङ्गहीनत्वम्, साधनयुक्तस्याङ्गस्याव्याप्तेर्हानात्। अयुक्ताङ्गाधिकत्वं साधर्म्यमारभ्यायुक्तस्याङ्गत्वोपगमात्। अविषयवृत्तित्वञ्चासत्प्रतिपक्ष एव। सत्प्रतिपक्षोद्भावनात्।

केचिदविषयवृत्तित्वं युक्ताङ्गहानावन्तर्भूतम्। प्रतिरोधं प्रतियुक्तस्याङ्गस्य समानबलत्वस्यावधारणात्। हानिस्त्वनुमानपक्षे प्रतिबन्धविरहात्। साधर्म्यरूपतामात्रप्रतिरोधकत्वाङ्गीकारात्। मानान्तरपक्षत्वप्रामाण्यपरिच्छेदादित्याहुः ।५।१।२।

युक्ताङ्गहीनत्वप्रदर्शनानुमानयोः प्रत्युत्तरं सूत्रम्—

**गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ।५।१।३।**

गोसिद्धिर्गोव्यवहारसिद्धिर्यथा। गोत्वात्तु नियतादेव, न तु तदनियतादसाधकात्। गोत्वेन वा सास्नाद्युपलक्ष्यत इति न साध्यावैशिष्ट्यम्। तथाहि साधर्म्यमात्राद्वैधर्म्यमात्राद्वा व्यभिचारिणो न साध्यसिद्धिः। तदुक्तेऽपि साधर्म्यादिना प्रतिघाते साधर्म्याद्यनन्तरं प्रतिघातसम्भवादिति।

अव्याघातकत्वं साधारणत्वम्। दुष्टत्वबीजमसाधारणन्तु युक्ताङ्गहीनत्वाद्युक्तम्। यदि च दूषणसामर्थ्यमिदमिति न जानाति, तदा तदर्थं वाक्यप्रयोगो व्याहतः, ज्ञानपूर्वकत्वात्तस्य। तज्ज्ञानञ्च तज्जातीयत्वादिलिङ्गधीजन्यम्। तस्य प्रतिधर्मप्रतिहतत्वेनासाधकत्वादिति तदादरणे व्याघातः। तद्वैधुर्ये च प्रवृत्तिनिवृत्तिरूपव्यवहारस्याहतिः। न च लिङ्गं विनापि शब्दात्तदधिगतिः। सर्वत्र तदभावात्। क्वचित्तु लैङ्गिकत्वस्यावश्यवाच्यत्वात्।

अपि च यदिदं व्याप्तिमनपेक्ष्य प्रत्यवस्थानं तदनुभयानुमत्या स्वानुमतिमात्रेण वा। नाद्यः, वादिना साधर्म्यादिमात्रस्य दूषकत्वानभ्युपगमात्। नान्त्यः, त्वदुक्तेऽप्येवंभूतसाधर्म्यादिप्रतिघातसम्भवात्। वादिना स्वानुमत्या यत्किञ्चिद्दोषाभिधानापत्तेः। न च तदपि दुष्टम्, तद्दुष्टत्वे स्थापनायाः सम्यक्कालापत्तेः[1]। किञ्च त्वदुक्तं यदि दूषकत्वनियतं तदा नियमग्राहकमानेऽप्येतद्दोषसम्भवान्न तन्मानमिति विरोधः। अथैतत्सम्भवेऽपि तन्मानमेव, स्थापनाप्येवं स्यादित्युद्देश्यासिद्धिः। अपि च साधर्म्यादिप्रतिहतत्वमसाधकत्वनियतमुपलभ्य यदि प्रत्यवतिष्ठसे, तदा हृदि नियमो, वाचि तद्विपर्यय इति वाङ्मनसोर्विसंवादः। न चेतः पुनरपि वाक्यप्रयोगो व्याहत इति ।५।१।३।

---

१. सम्यक्त्वानापत्तेः।

[उत्कर्षसमादिजातिषट्कप्रकरणम्]

अथ वैचित्र्यात्मकविकल्पानां साधर्म्यादिनिरूप्यत्वात् साध्यदृष्टान्तधर्मविकल्पजाति[?]प्रभव[उत्कर्षसमादि]जातिषट्कप्रकरणम् । तल्लक्षणाय सूत्रम्—

**साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ।५।१।४।**

इह यद्यपि वर्ण्यं ज्ञाप्यम् । तच्च हेतोः साध्यस्य वा । नाद्यो हेतावनुवर्तनीयं साध्यम्, तेन च प्रत्यवस्थानमसम्भवो[वि] । नान्त्यः, साध्यस्य साध्यान्तराभावात् केन प्रत्यवस्थेयम् । अत एव साध्यसमापि विसध्ना[1][विसंस्थुला] वर्ण्यसमपुनरुक्ता च धर्मिणः स्वपरसाधारण्याभावात् । समपदानन्वयश्चावर्ण्येनाज्ञाप्येन च प्रत्यवस्थानासम्भवः । तथापि वर्ण्यावर्ण्य [विकल्प] साध्यसमेषु भावप्रधानो निर्देशः । तत्र कृत्यस्य साधुत्वात् । प्रकरणावच्छेदकैकरूपलाभाय सर्वपदार्थप्रधानो द्वन्द्वः । तथाप्युत्कर्षादीनां लक्ष्यपदत्वात् साध्यदृष्टान्तयोर्द्धर्मविकल्पादित्यस्य च जातिषट्कसाधारण्येनातिव्यापकत्वादनेकलक्षणपरतयापि तस्य व्याख्याने प्रकरणोपाध्यप्राप्तेर्लक्षणं किमासामिति चेन्न ससाध्यानिरुक्त्यनन्वयं[2] विशेषमाश्रित्य साध्यदृष्टान्तधर्मविकल्पानां तत्तज्जातिलक्षणत्वात् । [स]साध्यार्थमात्रस्यालक्षणत्वात् । पक्षाविद्यमानधर्मासञ्जनादेर्जात्यन्तरेऽपि सम्भवात् ।

तत्र धर्मविकल्पादित्यन्तेन पञ्च लक्षणानि । तत्साध्यत्वादिति षष्ठमिति प्राञ्चः । उभयमपि सर्वत्रेति नव्याः । उत्कर्षसमादिष्वप्युभयसाध्यत्वात् । साध्यसमस्यापि साध्यदृष्टान्तधर्मविकल्पादेवोत्थानात् । घटे दृष्टान्ते दृष्टा तत्कृतकत्वाद्यथा शब्दे साध्यमनित्यत्वं, तथा तत्रैव तस्य रूपसाहचर्यमप्यस्तीति तत एव रूपवत्त्वमप्यस्तु । नह्युभयोः साध्यत्वेन विशेषोऽस्तीत्युभयसाध्यत्वेनोत्कर्षादीनामप्युत्थानात् ।

साध्यसमस्यापि साध्यविकल्पवदुभयत्रोभयान्वये चकारः समुच्चयार्थः सङ्गच्छते । साध्यसमायान्तु यद्यपि साध्यसमर्थत्वनिरुक्त्या नावयवो[व]योगलाभः । यथालाभन्तु वर्ण्यसमभेदः तथापि साध्यपदस्य विशेषपरतया प्रतिज्ञेयमात्रपरत्वात्तल्लाभः । उभयसाध्यत्वादित्यत्राप्यवगतेश्च । विशेषपरतां विना तत्राप्यवयवयोगालाभात् । साध्यदृष्टान्तधर्मविकल्पोभयसाध्यत्वादित्यत्राप्यवगतेश्च । विशेषपरतां विना तत्राप्यवयवद्वा[व्यवा]भ्यामुत्थानबीजख्यापनं न हि युक्त्याभासमप्यप्रतिसन्धाय

---

१. विसध्नला ख ।

२. ससाध्यपाठे दृष्टान्तस्य संग्रहः ।

प्रत्यवस्थानम्, अबुद्धिपूर्वके जातिप्रयोगे निमित्ताभावात्। बुद्धिपूर्वकेऽपि कथं तथाविधेन परबुद्धिव्यामोहनम्। व्यामोहने वा सर्वेण सर्वत्रोत्कर्षादिकमुपन्यस्येते [त]। साध्यः पक्षः, दृष्टान्तो व्याप्यव्यापकवत्तयाऽवधारितः, धर्मविकल्पो धर्मवैचित्र्यम्। सत्त्वासत्त्वमिति यावत्। तदस्य षट्कस्यैतरव्यावृत्तानुगतरूपजिज्ञासायां धर्मवैचित्र्यमुत्कर्षादिष्वन्यथा दर्शनीयमतस्तत् प्रकरणार्थविच्छेदकं यद्यपि न भवति, तथाप्युत्कर्षादिषु वैचित्र्यस्य नानाप्रकारकस्य वैचित्र्येणैव सामान्येन रूपेण समस्तविशेषप्रतिपादनम्। योग्यतया चोत्कर्षादौ क्वचित् किञ्चित् वैचित्र्यमन्वेति। आवृत्त्या वा प्रत्येकमुत्कर्षादिषु वैचित्र्यभेदानां प्रतिपादनम्। परस्य वया [वाक्यार्थ]ज्ञानद्वारा धर्मविकल्पस्य हेतुत्वम्। साध्यदृष्टान्तयोर्धर्मः, तस्य विकल्पो वैचित्र्यम्, तस्मादनिष्टप्रयोजन[०ष्टप्रसञ्जन] मित्यर्थः। क्व प्रसञ्जनमित्यपेक्षायां साध्यदृष्टान्तयोरित्यन्वीयते। उपस्थितत्वात्। केचित्तु साध्यदृष्टान्तयोरिति सप्तमी। धर्मस्याश्रयापेक्षायां साध्यदृष्टान्तयोरेवान्वयः, तत एवेत्याहुः।

तत्रोत्कर्षसमे धर्मविकल्पो व्याप्यस्य व्यापकस्य वा ? परोदीरितानुमानवाक्यापनीतस्य दृष्टान्त आपाद्यः साहचर्योपालम्भः। पक्षे च तद्विरहप्रयुक्तस्तत्साहचर्यात् साहचर्यानुपलम्भः। उभयत्र सत्त्वासत्त्वयोरुत्कर्षाभावात्। एकत्र सतोपस्थाने सत्त्वापादना स्यात्। तस्मात् साध्यदृष्टान्तधर्मविकल्पादुत्कर्षोऽविद्यमानधर्मासञ्जनमुत्कर्षसमः। अर्थाच्चाभ्यासेव[न]साध्यसाधनाभ्यां साध्यदृष्टान्तनिरूपकतया तयोरुपस्थितेरन्तरङ्गत्वात्, साध्यसाधनाभ्यां संबन्धमात्रं गमकत्वे तत्त्वमित्यभिमानो मूलमत्र। तेन साहचर्यमात्रपुरस्कृतगमकत्वयोः सिषाधयिषितसाधनयोरन्यतरेण पक्षदृष्टान्तान्यतरेऽविद्यमानधर्मासञ्जनमुत्कर्षसमः। पक्षनिष्ठस्य परोक्तसाधनाव्यापकस्य परोक्तादेव साधना[दा]पादानमुत्कर्षसम इत्यन्ये।

केचित्तु सूत्रे दृष्टान्तपदमजहत्स्वार्थलक्षणया दृष्टान्तादृष्टान्तपरम्। अत एव विकल्पसमायां साधननिष्ठमेवापादनम्। तेन विपक्षेऽपि परोक्तसाधनसाहचर्यमात्रेण पक्षाविद्यमानधर्मापादनरूपोत्कर्षसमसंग्रहः। तथा च साध्यसाधनान्यतरसहचारमात्रेण पक्षेऽविद्यमानधर्मासञ्जनमुत्कर्षसम इत्याहुः।

उदाहरणं, शब्दोऽनित्यः, कृतकत्वादित्युक्ते, अनित्यं घटादि, रूपवत् क्रियावदश्रोत्रं दृष्टमिति शब्दोऽप्येवं स्यादविशेषात्। तथा च विवक्षितविपरीतसाधनाद्विशेषविरुद्धो हेतुः। यथा[1] वा क्रियाहेतुगुणयोगाल्लोष्टवत् क्रियावान्, आत्मा, [लोष्टवदेवस्पर्शा] वानपि प्राप्नोति, अथ न [स्पर्शवान् लोष्टवत्] न क्रियावानपीति। य एवं दोषस्य[षः] त[स्य]एव सदसद्विषयत्वाद्द्विविधेयम्। असदुक्तिकत्वञ्चेह न सम्भवति, उत्कर्षेण प्रत्यवस्थानस्यासदुत्तरत्वनियमेनोक्तिमात्रगतासद्रूपताविरहात्। शब्दो द्रव्यं सत्त्वादित्युक्ते यदि द्रव्यं गुणवान् स्यादविशेषादित्यत्रासदुक्तिका तृतीयापि विधेत्यन्ये।

---

१. तुलनीया भाष्यपंक्तिरेतत्सूत्रस्था।

साध्यं धर्मिणं विहाय दृष्टान्ते गततया निरूप्यमाणस्य तथैव साधनस्यापाद्येन सहोपलम्भः कारणमस्याः, हेतुर्दूष्यः, प्रतिकूलतर्कहेतुर्विशेषविरुद्धत्वं वाऽऽरोप्यम्। वादिनि मध्यस्थे वा तद्भ्रान्तिः फलम्। विशेषविरोधदेशनाभासा चेयम्।

इदमेव कारणमपकर्षसमेऽपि। धर्मविकल्पः स एव, केवलं साध्यदृष्टान्ते साहचर्यमात्राद् व्यापकताऽपि। तस्य व्यावृत्त्या साध्यसाधनयोरन्यतरस्य व्यतिरेकोपादानत्वादपकर्षसमो भिद्यते। न चाभावरूपधर्मस्य पक्षेऽविद्यमानस्यासञ्जना [नमपकर्षसम] एवापादनात्। न तु भावविषय एवोत्कर्षसमोऽभावविषयोऽपकर्षसमः। सूत्रालभ्यत्वाद् व्यर्थविशेषणत्वाच्च। न चोत्कर्षसम[ए]व व्यवच्छेद्यः, मिथः सङ्कीर्णतावादिनि तदसिद्धेः।

यद्वा अपकृष्यमाणस्य पक्षनिष्ठाभावप्रतियोगित्वापादने उत्कर्षसमः। पक्षे तदभावापादने त्वपकर्षसमः। सम्बन्धमात्रं पुरस्कृत्य व्यापकत्वस्य धर्मस्य व्यावृत्त्या साध्यदृष्टान्तयोः सिषाधयिषितसाधनाभिमतयोरन्यतराभावप्रसञ्जनमपकर्षसम इति लक्षणम्। यद्वा सहचरितमात्रधर्मव्यावृत्तिनिबन्धनसहचरितान्तरधर्मव्यावृत्त्या पराऽनिष्टापादनमपकर्षसमः। यथा तत्रैव प्रयोगे घटो नामूर्त इति शब्दोऽप्यमूर्तो न स्यात्। एवं दृष्टान्तेऽप्यपकर्षसम उदाहार्यः। तथा तत्रैव प्रयोगे रूपमनित्यमरूपं दृष्टम्, तत्त्वञ्च[1] घटे नास्तीति, अनित्यत्वमपि व्यावर्तेत। तथा च साध्यविकलो दृष्टान्त इति साध्यापकर्षे शब्दः कृतको नीरूपो दृष्टो न घटस्तथेति कृतकत्वमप्यस्य निवर्त्तेत। तथा च साधनविकारो[कलो] दृष्टान्त इति साधनापकर्षे, एवं दार्ष्टान्तिकव्यावष्टम्भे[2]स्तेनान्यस्यान्यत्रापकर्षो भवति। यथा श्रावणत्वव्याप्तं विभुविशेषगुणत्वं शब्दे द्विमतः[3][ऽभिमतम्], सुखादीनां श्रावणत्वं निवर्तमानं विभुविशेषगुणत्वमादाय निवर्तते।

अत्र प्राञ्चः साध्य एव सिसाधयिषितसाधनयोरपकर्षो न दृष्टान्तादौ, असम्भवदुक्तिकत्वात्। तथा हि व्यापका[कत्वा]भिमतधर्मव्यावृत्त्यपेक्षयोरन्यतरापकर्षः[4] संभवति। दृष्टान्ते च तदपकर्षस्यासम्भवः पक्षे साध्यस्य सन्दिग्धत्वात्तेन सह व्याप्तेरग्रहणात् व्यापकनिवृत्तेरेवायोगात्। दृष्टान्ते साध्यादिवैकल्यस्यानुद्भावनात्। न च धर्मान्तरस्य तत्रापकर्षः, तद्दूषणेऽपि प्रकृतादूषकत्वेनार्थान्तरत्वात्। इष्टापादने मतानुज्ञापत्तेः। कथञ्चिदनिष्टापादने त्वविशेषसमत्वादित्याहुः।

---

१. नरूपत्वम्।

२. व्यावष्टम्भे ख।

३. द्वमतः ख।

४. व्यावृत्त्यापेक्षतयोः ख। व्याप्यत्वाभिमतयोः इति पाठः सम्यक् भाति।

**अत्र वदन्ति** अनिष्टप्रसङ्गस्य प्रतिकूलतर्काघातरूपत्वेन प्रकृतदूषणतया नार्थान्तरत्वम्, ईश्वरानुमाने शशशृङ्गापादनवत्। नाप्युक्तेरसम्भवः। पक्षे साध्यव्याप्त्यग्रहे तद्वृत्तिधर्मव्यावृत्त्या साध्याभावान्यापादनेऽपि दृष्टान्ते साधनाभावापादनं स्यादेवेति साधनवैकल्योपन्यासः। यथा शब्दे कृतकत्वं श्रावणत्वेन व्याप्तं, तच्च घटादौ निवर्तमानं कृतकत्वमपि व्यावर्त[य]तीत्यादि । अत एव न मतानुज्ञा। अनिष्टभ्रमेणेष्टप्रसञ्जनस्य तत्त्वात्। वस्तुतः पक्षादन्यत्र साध्यसाहचर्यमात्रा[द्] दृष्टान्तावृत्तिधर्माणां साध्यव्यापकत्वनिश्चये तद्व्यावृत्त्या साध्यापकर्षोऽपि नासम्भवदुक्तिकः।

**प्राचां** त्वयं भावः, यद्व्यावृत्त्या साध्यसाधनयोर्दृष्टान्ते व्यतिरेकापादनं तस्य तौ प्रति व्यापकत्वग्रहो, न पक्षे, तत्र साध्याप्रसिद्ध्या तत्सहचारस्याप्यग्रहात्। साधनस्य तत्र सिद्धावपि साध्यरूपतद्व्यापकत्वाभिमतवत्तया सन्दिग्धे साध्यस्येव न धर्मान्तरस्यापि तद्व्यापकत्वनिश्चयः। उक्तसंशयस्यैव तद्विरोधित्वात्। न हि व्यापकविशेषवत्तया सन्दिग्धे धर्मिणि केनापि कस्यापि तद्व्यापकत्वमवधार्यते। व्यापकसन्देहे तस्यैवादाढर्यात्। न च साध्ये व्यापकताभिमानशैथिल्यम्; तद्धि यदि दोषान्तरेण तदा तदेव ब्रूयात्, प्राथम्यात्। न हि दूषणप्रवृत्तस्तज्ज्ञाने बिलम्बते। जातेश्च पूर्वमनुपस्थितिः। परव्यामोहनार्थत्वस्याप्यभावात्। नाप्यपकर्षेणैव तत्। अन्योन्याश्रयात्। नापि दृष्टान्ते, तोपति [?] [यतोऽत्र] व्यापकत्वग्रहः। व्यापकव्यावृत्त्यसिद्ध्या तदभावापादनासम्भवात्। अन्यत्र तद्ग्रहणेऽपि न साध्यदृष्टान्तधर्मविकल्पोत्थितत्त्वमिति; नैतज्जात्यन्तर्निवेश इति। क्वचिदस्यासदुक्तिकत्वमपि। यदि क्रियाहेतुगुणयोगाल्लोष्ठवत् क्रियावानात्मा तर्हि तदेव वैभवमप्यस्य[1] हेतोर्वा बाधः। सद्दूषणमेव,[2] अतो न जातिः, न साहचर्यमात्र [म्], [त] स्यादृष्टव्यभिचारित्वाद्दृष्टोपाधिकत्वमात्रविशेषितस्य व्याप्या[व्या]पकत्वस्य विवक्षितत्वात् तादृशव्यापकनिवृत्तेश्च सिद्धत्वेऽपि दूषणासमर्थत्वात्। तथापि साध्यापकर्षपक्षः प्रकरणसमातोऽविशिष्ट एव, हेत्वपकर्षसम्भवी तस्य स्पष्टदृष्टत्वादिति चेत्, प्रकरणसमायां यद्यपि बाधदेशना तथापि सुसाधनस्य बलवत्त्वमपुरस्कृत्य सा तत्रोच्यते। इह तु स्वयं विवक्षितव्यापकत्ववशाद् यादृशं व्यापकानुपलब्धित्वम्, तदेव बलवत्त्वमित्यभिमानिना तत्पुरस्कृत्येति विशेषः।

अत एव स्पष्टदृष्टस्यापि साधनस्य साधनमिति[०नत्वेन] घटते। अत एव प्रतिबो[रो]धदेशनेऽप्यस्य न साधर्म्यवैधर्म्यसमयोरन्तर्भावः। तत्र प्रतिबो[रो]धानुकूलमेव बलं पुरस्कृत्य प्रवृत्तिः, इह तु यथोक्तमेवाभिमानिकं बलम्, अनुकथा हीनबलेनैव प्रतिबो[रो]धासञ्जनात्। तदस्या व्यापकानुपलब्धिर्ध्रुवहेतुर्दृष्टः।

---

१. वैभवमप्यस्या ख।

२. सद्दूषणमु ख।

साध्यापकर्षे बाधः । व्यापकानुपलब्धेर्द्देश्यप्रतियोगिकबलवत्वपुरस्कारात् । तदपुरस्कारे तु सत्प्रतिपक्षत्वमारोप्यम् । तदारोप्यदेशनाभासा चेयम् ।

वर्ण्यः ख्यापनीयः साध्य इति यावत् । धर्मविकल्पनञ्च नात्र साध्यदृष्टान्तयोः सत्त्वासत्त्वाभ्यां धर्मस्य वैचित्र्यम्, किन्तु स्वधर्मद्वारेण तच्च दृष्टान्ते । ये धर्मा हेतोरविवक्षिताः पक्षमात्रे विवक्षिताः तत्वात्वनाशत्व[तत्त्वेनासत्त्वम्] स्वरूपेण च सत्त्वम् [?] ते च धर्मा व्यापकाभिमतधर्मवत्त्वेनानिश्चीयमाने धर्मिणि निश्चीयमानसत्तावत्त्वम् । तदेवासिद्धार्थत्वम्, तथा संशयसमानविषयत्वम् । तच्चाभिन्नविषयसंशयप्रसवसमर्थसंस्कारसाचिव्यम् । तथाभूतसंस्कारस्य प्रमितिमात्रनाश्यत्वात् । तथा सिषाधयिषितधर्मवत्त्वेनोद्देश्यतासामानाधिकरण्यम् । तथा व्याप्तिग्राहकमानाधीनगृहीत[1] धर्मविशेषसामानाधिकरण्यम् । स्वरूपविशेषश्चेति ।

उत्थानबीजन्तु सिद्ध्यौपयिकसमस्तरूपसम्पन्नो दृष्टान्तो न वा ? यद्याद्यः, तर्ह्यसिद्धार्थत्वादीनां पञ्चानां साध्यसिद्ध्यर्थः । गुणानां हेतुविशेषाणामङ्गीकारे सिद्धोऽसाविति साध्यधर्मवत्तया दृष्टान्तः ख्यापनीयः स्यात् । न हि साध्यविकलो दृष्टान्तः । नेति पक्षे न दृष्टान्तः, न हि श[अस]मकृतौपयिकरूपवत्त्वे[हे] तुमत्त्वेनासंप्रतिपन्नदृष्टान्तः, साधनवैकल्यादिति दृष्टान्ततया वर्णनीयः स्यात् । तेन दृष्टान्तावृत्तिसिद्ध्यर्थं गुणधर्मवत्तया गमकत्वमित्यभिमानेन दृष्टान्तस्य ख्यापनीयत्वापादानं वर्ण्यसमः । यत् किञ्चित् धर्मसाम्येन सपक्षस्य पक्षत्वापादानं वा वर्ण्यसम इति लक्षणम् । अस्याश्च पक्षे विवक्षितो हेतुविशेषोद्धारं दृष्टान्तो दृश्यः, साध्यसिद्ध्यङ्ग [पक्षसत्त्वादि] पञ्चकालिङ्गितो हेतुः यदि दृष्टान्तः तदा साध्यवैकल्यं, अन्यथा साधनवैकल्यमिति प्रत्यवस्थानात् । तद्द्वारा हेतु र्वा । यत्र यत्र हेतुरुपदर्शनीयः, तत्र साध्यसन्देहे साध्यविपरीतव्याप्तत्वरूपविरुद्धत्वसन्देहात् सन्दिग्धविरुद्धत्वम् । अथ [र्थ] गमकरूपवान् हेतुः पक्ष एव तर्ह्यसाधारण्यमिति प्रत्यवस्थानात् । तद्भ्रान्तिः फलम् । तद्देशनाभासा चेयम् । उत्कर्षसमैवेयं पक्षधर्माणां दृष्टान्तासञ्जनात् । उक्त्यनुसारेणापकर्षसमा वेति चैतान् [चैतयोः] साधनधर्मबलेनोत्कर्षस्यापकर्षस्य वा प्रसञ्जनात् । दृष्टान्तदार्ष्टान्तिकभावमात्रबलेन ह्यत्र वर्ण्यत्वं तत् प्रतिषेधो वा, न तूक्तहेतुबलेन । अत एवात्राश्रयासिद्धि-स्वरूपासिद्ध्यादयो विपञ्चिताः, तत्र तु विशेषविरोधः । तर्हि हेतोरूपालम्भनमना स्त [स्थ] यैव । यदि रूपाद्युत्कर्षापकर्षाभ्यां प्रत्यवतिष्ठते तदा किं वाच्यम् । प्रकृतादूषणत्वेनार्थान्तरमतानुज्ञान्यतरत् । अनिष्टप्रसञ्जनेन दृष्टान्तिके विघटयतः कथं मतमपीति चेत्, एवं ह्यनङ्गमेव रूपाद्यधिकमङ्गमारोप्य तदवच्छेदेनैव धर्मो [?] साधनधर्मादेः प्रयोजकत्वमभ्युपगच्छन् पूर्ववदेव साध्यदृष्टान्तयोरन्यतरासिद्धिमभिप्रेयादिति वाच्यम् । तथा च वर्ण्यावर्ण्यसमावेव ।

---

१. व्याप्तिग्राहकसमानागृहीत ख ।

एतेनावर्ण्यसाध्यसमयोरप्युत्कर्षप्रसङ्गो वारणीयः। इयमेव विपर्ययेण रीतिरवर्ण्यसमस्य। तथा हि गमकतौपयिकरूपवत्त्वे[हे]तुमत्तया सिद्धस्यापि पक्षस्य दृष्टान्तत्वौपयिकरूपवत्ताविशिष्टहेतुमत्त्वेनासिद्धिः धर्मविकल्पः। न चोक्तरूपपञ्चकविरह एव। उत्थानबीजन्तु गमकत्वानुगुणदृष्टान्तवृत्तिर्या[या]वद्धर्मवान् पक्षो न वा। आद्ये न ख्यापनीयः सिद्धत्वादिति नायं पक्षः, इत्यपक्षधर्मो हेतुः। न चेत्, तथापि न ख्यापनं यः तथाविधहेतुमत्तयाऽनुपसंहारादिहेतुस्वरूपासिद्धिः। तेन दृष्टान्तमात्रवृत्तिसिद्ध्यर्थगुणधर्मयोगायोगान्यतरेण · साध्यस्याख्यापनीयत्वप्रतिपादनमवर्ण्यसमः। किञ्चिद्धर्म [विशिष्ट] साध्येन पक्षस्य साध्यवत्तया निश्चितत्वापादानं वाऽवर्ण्यसम इति लक्षणे, तत्रोक्तरूपो धर्मविकल्पोद्धारं हेतुर्दूष्यः। आश्रयासिद्धिस्वरूपासिद्धी आरोप्यः, तच्चोदनाभासा चेयमिति। साध्यस्य वर्ण्यत्वापादने उक्तिसम्भव एव नास्ति। तत्रासत्त्वेन निर्णीतस्य तत्रापादनात्।

केचित्तु प्रयोगे किञ्चित् साध्यं किञ्चित् सिद्धं तत् सिद्ध्यनुगुणं, तत्र साध्यमेव सिद्ध्यनुगुणमित्यभिमानेन सिद्धे साध्यत्वप्रसञ्जनं वर्ण्यसमः। सिद्धमेवानुगुणत्वविरोधादित्यभिमानेनासिद्धे सिद्धमेतदवर्ण्यमेतदिति प्रत्यवस्थानमवर्ण्यसमः। तेन साध्यदृष्टान्तयोरन्यत्राप्यवर्ण्यसमसंग्रह इत्याहुः।

विकल्पसमायां तु साध्यदृष्टान्तयोः धर्मो हेतुः साध्यमेतद्भिन्नं चेति त्रिधा। तस्य विकल्पो व्यभिचारः। स च हेतुविषय एव हेत्वाभासत्वात्। साध्यदृष्टान्तयोर्राधिकरणत्वेनान्वययोग्यता ज्ञानाभावात्। व्यभिचारश्च षोढा [त्रिधा] हेतोर्धर्मान्तरं प्रति वा, धर्मान्तरस्य हेतुं [साध्यं] प्रति वा, धर्मान्तरस्य साध्यं [?] धर्मान्तरं प्रति वा। साध्यदृष्टान्तसंबन्धिधर्मव्यभिचारबलेन हेतोर्व्यभिचारापादानं विकल्पसमः। किञ्चिद्धर्मव्यभिचारदर्शनमूलकप्रकृतसाध्यव्यभिचारापादानं वा स इति लक्षणम्। तत्तु यथाऽयं व्यभिचरति तथा हेतुरप्यविशेषादिति वा, साध्यदृष्टान्तवृत्तियत्किञ्चिद्धर्मव्यभिचार एव हेतोर्दूषकः। हेतोरपि तद्वृत्तित्वादित्यन्यव्यभिचारादेवायं हेतुर्दुष्ट इति वा प्रसञ्जनमित्येके।

हेत्वाभासान्यधर्मस्येह विकल्परूपत्वे तद्बलेन धर्मान्तरापादने उत्कर्षसमादिजातिरूपतेति हेत्वाभासत्वेन साध्यदृष्टान्तधर्माणां विकल्पो वाच्यः, न तु व्यभिचारित्वेन, संकोचे मानाभावात्। तथा च हेतुसाध्यतदन्यसाध्यदृष्टान्तधर्माणां क्वचित् सिद्धत्वादि क्वचिन्नैवमिति विकल्पादसिद्धत्वादन्यतमहेत्वाभासापादनं विकल्पसमः। अन्यथा व्यभिचारान्यहेत्वाभासेनाप्युक्तबलेनापादनं जात्यन्तरं स्यादित्यन्ये।

तत्र हेतोर्धर्मान्तरं प्रति व्यभिचारस्त्रिविधः—दृष्टान्त एव व्यक्तिभेदमादाय, साध्यदृष्टान्तरूपं वा भेदम्; साध्यव्यक्तिभेदं वा। तत्राद्यो यथा—क्रियावानात्मा क्रियाहेतुगुणवत्त्वादित्युक्ते क्रियाहेतुगुणयुक्तं किञ्चित् गुरु यथा लोष्टः, किञ्चिल्लघु यथा वायुः, एवं क्रियाहेतुगुणवत् किञ्चित्, क्रियावत्, यथा लोष्टः, किञ्चिदक्रियं

यथात्मेति। द्वितीयो यथा—शब्दोऽनित्यः कृतकत्वादित्युक्ते यथा कृतकत्वे सति शब्दो विभागजः, न घटस्तथा नित्यानित्यविकल्पोऽपि स्यादिति। तृतीयो यथा—अनित्ये वाङ्मनसी अ[ा]स्यवत्त्वादित्युक्ते तयोरेव मूर्तविकल्पवन्नित्यानित्यविकल्पोऽपि स्यादिति। सर्वहेतोर्धर्मान्तरं प्रति व्यभिचारः। धर्मान्तरस्य हेतुं प्रति व्यभिचारो यथा—शब्दोऽनित्यः कृतकत्वादित्युक्ते यथा प्रमेयत्वे समानेऽपि किञ्चिन्नित्यमनित्यञ्च किञ्चित्, तथा कृतकत्वे समानेऽपि किञ्चिदनित्यं किञ्चिन्नित्यं शब्दादीति। धर्मान्तरस्य साध्यधर्मं प्रति व्यभिचारो यथा—तत्रैव प्रयोगे यथा प्रमेयत्वमनित्यत्वं व्यभिचरति तथैतद् स्यादिति। साध्य [स्य] धर्मान्तरं प्रति व्यभिचारो यथा- अनित्यत्वं घटादिव्यभिचरति। साध्यस्य हेतुं प्रति व्यभिचारो यथा—धूमं वह्निः व्यभिचरति तथा धूमोऽपि वह्निं व्यभिचरिष्यति।

धर्मान्तरस्य धर्मान्तरं प्रति व्यभिचारस्त्रिविधः पूर्ववत्। तत्र दृष्टान्तव्यक्तिभेदेन खल्वपि यथा—शब्दोऽनित्यः, कृतकत्वदित्युक्ते 'यथा द्रव्यत्वे समानेऽपि किञ्चिदुष्णं यथा तेजः किञ्चिच्चानुष्णं, यथा जलादि, तथा कृतकत्वे समानेऽपि नित्यानित्यविकल्पोऽस्त्विति। साध्यदृष्टान्तभेदेन खल्वपि, यथा—अनित्यः शब्दः कार्यत्वात्, विभागवदित्युक्ते यथा गुणत्वे समानेऽपि विभागः कारणाकारणविभागः कारणाकारणविभागपूर्वकः शब्दस्तु कारणमात्रविभागपूर्वकः। तथा कार्यत्वे समानेऽपि नित्यानित्यविकल्पोऽस्त्विति। साध्यमात्रभेदेन खल्वपि। यथा तत्रैव प्रयोगे शब्दत्वे समानेऽपि कश्चिन्नित्यः स्यादिति। तत्र साध्यदृष्टान्तयोरिति [५।१।४।] सूत्रं प्रत्येकसमुदायोपलक्षणतया योजनीयम्। प्रत्येकमर्थाभिधानं चेत्तदा…[समुदा] यार्थ उपलक्ष्यः, समुदायार्थाभिधानञ्चेत्तदा प्रत्येकार्थ उपलक्ष्यो बोद्धव्य इति योजनार्थः। साध्यस्य दृष्टान्तस्य यो धर्मः तत्साहचर्यस्य यद्येवं बलं तदेव व्यभिचार एव किन्नात्रेत्यभिमानो मूलमत्र। तेन न विकल्पान्तरो[रा]र्थस्यैतदन्तर्भावशङ्का। हेतुदूष्यः। अनैकान्तिकत्वमारोप्यम्। तदाऽऽभासा चेयम्।

साध्यसमायां तु पक्षलिङ्गदृष्टान्ता मानान्तरसिद्धानुमानाङ्गम्, नासिद्धाः। नापि तत एव सिद्धाः। सिषाधयिषितस्तु पक्षेऽसिद्धः, तत एव सिद्ध्यतीत्ययं साध्यदृष्टान्तयोर्धर्मविकल्पः। अस्मादवधारितादुभयोः सिद्ध्यसिद्ध्योः तुल्यवत् साधनार्हत्वमुभयसाध्यत्वम्। च शब्दो धर्मविकल्पस्य तद्धेतुतयानुकर्षणेनोक्तिसम्भवज्ञापनार्थः। ततः पक्षलिङ्गदृष्टान्तानां सिषाधयिषितसाध्यत्वारोपात् तद्धेतुसाध्यत्वापादनं साध्यसमः। लक्षणं तु तत् प्रयोगान्तर्भावबलेन सिद्धानां तत् प्रयोगसाध्यतयोद्देश्यत्वापादानं साध्यसमः।

यद्वा, एतत् प्रमाणसाध्यस्यैव तत्प्रमाणाङ्गत्वमित्यभिमानिनः तदनुरूपदूषणोद्भावनं साध्यसमः। अतएव नायं वर्ण्यसमः। तत्र हि साध्यत्वमात्रस्यासञ्जनमिति। साध्यवदेव पक्षादीनां तथाभावस्यारोपाः तत्प्रयोगज्ञाप्यत्वमारोप्यते। उत्थानबीजं तु पक्षलिङ्गदृष्टान्तानां यद्येतत् प्रयोगान्तर्भूतानामपि नैतत् प्रयोगसाध्यः, तदा साध्यांशेऽप्यप्रयोजकत्वमविशेषात्॥

अथ तत्प्रयोजकत्वं तर्हि पक्षादिष्वपि तथा, तुल्ययोगक्षेमत्वात् । न च तेषां मानान्तरसिद्धत्वं, लिङ्गस्याप्रयोजकत्वप्रसङ्गात् । तत्प्रतिपत्तिजनकत्वमेव तत्प्रयोजकत्वमित्यभिमानात् । तथा च पक्षलिङ्गदृष्टान्ततद्धर्माणामपि तत्प्रयोज्यत्वं सुलभम् । एवं तत्प्रयोगनिवृत्तौ तत्सिद्धिः, तत्सिद्धौ तत्प्रयोगनिवृत्तिरित्यन्योन्याश्रयः । पक्षतद्विशेषणासिद्धावाश्रयासिद्धिः । लिङ्गतद्विशेषणासिद्धौ स्वरूपासिद्धिः । दृष्टान्ततद्विशेषणासिद्धौ व्याप्यत्वासिद्धिः । दृष्टान्तस्वरूपासिद्धिश्च । साध्यवैकल्यादित्यादिकमूह्यम् । तदेवारोप्यम् । तदाभासा चेयम् ।

ननूत्कर्षापकर्षवद्वर्ण्यावर्ण्यसमवच्च विकल्पसमेऽप्यविकल्पसमः, साध्यसमेऽप्यसाध्यसमः कस्मान्नोच्यते । आद्यस्यासम्भवात् । न हि पक्षसपक्षयोः साधर्म्येणावैचित्र्यं प्रत्यवस्थानाय कल्प्यते ।

अथ व्यतिरेकिणि विपक्ष एव दृष्टान्तः, तदवैचित्र्येणोपालम्भः स्यादेव । जीवच्छरीरं न निरात्मकं प्राणादिमत्त्वात् । यन्निरात्मकं तन्न प्राणादिमत्, यथा घटादि । ततो यथा प्राणादिमत्त्वाप्राणादिमत्त्वविकल्पेऽपि जीवच्छरीरघटयोः सत्त्वाद्यविकल्पः, तथा नैरात्म्यविकल्पोऽपि स्यादिति प्रत्यवस्थानं स्यादिति चेन्न । अत्र हि सत्त्वस्य, यदि प्राणादिमत्त्वस्याप्यनैरात्म्यसाध्ये दुष्टत्वमभिमतम्, तदा विकल्पसम एव । अन्यव्यभिचारबलेनान्यत्र प्रत्यवस्थानात् ।

अथ सत्त्वेनैव नैरात्म्यलक्षणोऽविशेषोपि जीवच्छरीरघटयोः साध्यते । तदाप्यविशेषसमः । असाध्यसमस्त्ववर्ण्यसम एव । प्रवर्तमानहेतुसाध्यत्वप्रतिक्षेपस्य तत्प्रवृत्तेरेव विषयत्वात् ।

सौगतास्तु, चतुर्दशजातिवादिन उत्कर्षादीनां षण्णामेकत्वमेव । साध्यदृष्टान्तयोर्द्धर्मविकल्पादुत्थानस्याविशेषादित्याहुः । तत्रैकत्वं यदि सर्वथैवाभेदे विवक्षितम्, तर्हि अविशेषसमाजातिः । अथैकजातीयत्वं, तर्हि न किञ्चित् बाध्यते । तथा द्वे षोढ़ा व्युत्पादने यथोक्तविशेषालम्बनस्य बलभिदाऽपि भेत्तुमशक्यत्वात् ।५।१।४।
आसां दुष्टत्वमूलप्रतिपादनपरं सूत्रम्—

**किञ्चित्साधर्म्यादुपसंहरसिद्धेर्वैधर्म्यादप्रतिषेधः ।५।१।५।**

**किञ्चित्साधर्म्यात्**—केनचित् साधर्म्यान्नियतात्, न तन्मात्रात् । उपसंह्रियते पक्षे साध्यत इत्युपसंहारः सिषाधयिषो[यिषितो] धर्मः तस्य सिद्धिर्ज्ञानं यतो । अतो वैधर्म्यात् अनियतात् न प्रतिषेध उत्कर्षसमरूप इत्यर्थः । इहैवं प्रत्युत्तरक्रमः स्यादेतत्, यदि घटे अनित्यत्वसहचरितमात्रात् कृतकत्वावच्छेदे[ना]ऽनित्यत्वमुपसंहारात्मा । नत्वेवम्, किन्तु [अ] चेतनव्याप्तं तदिति ।

एवञ्च यदि रूपादिसत्त्वेनापि व्याप्तिः स्यात्, ततस्तूत्कर्षं को नेच्छेत्, नत्वेवम् । तवायमभ्युपगमो न ममेति चेत्, एवं तर्हि त्वदभ्युपगतेऽप्यसाधकतासमाने

तद्दोषापत्तिरिति स्वोक्तिव्याघातः । एवमपकर्षसमेऽपि । किञ्चित्साधर्म्यात्तृतीयलिङ्ग-परामर्शविषयात् तत्सिद्धेः वैधर्म्यादनियामकधर्मव्यावृत्तेर्न प्रतिषेधः साध्यहेत्वो[र]पकर्षरूप इत्यर्थः । एवमभ्युपगमे स एव व्याघातः । एवं वर्ण्यसमेऽपि । किञ्चित्-साधर्म्यात्तृतीयलिङ्गपरामर्शविषयादुपसंहारसिद्धेः, वैधर्म्यादसिद्धार्थत्वादेः न प्रतिषेधो 'वर्ण्यत्वापदेशनमित्यर्थः । अन्यथाऽनुमानमात्रोच्छेदे स एव व्याघातः । एवमेव विपर्ययेणावर्ण्यसमेऽपि । किञ्चित्साधर्म्यापेक्षदृष्टान्तवृत्तिलिङ्गवृत्त्योः व्याप्यतावच्छेदक-रूपादुपसंहारसिद्धेः वैधर्म्यात् सिद्धार्थत्वादेः न प्रतिषेध उक्तरूप इत्यर्थः । अन्यथा, एवम्भूतेनावर्ण्यत्वेन जात्युत्तरस्यापि व्याप्तेः स एव व्याघातः । तदनयोरविषयवृत्तित्वं दुष्ट[त्व]बीजम्, असिद्धार्थत्वादीनां लिङ्गाङ्गानां पक्षैकनियतानां सपक्षनयनात्, सिद्धार्थत्वादीनाञ्च सपक्षैकनियतानां पक्षनयनात् । एवं विकल्पसमेऽपि किञ्चित्साधर्म्यात् केनचिद्व्याप्तत्वात् लिङ्गस्योपसंहारसिद्धेः, पक्षे साध्यसिद्धेः वैधर्म्यादर्थान्तरेणाव्याप्तत्वादप्रतिषेधः । नह्येकेन व्याप्तं सर्वव्याप्तमित्यभ्युपगमेनापि एकव्यभिचारि सर्वव्यभिचारीति नियमः । तथात्वे चोक्तरूपो व्याघातः । अत्रापि अविषयवृत्तित्वमेव दुष्टत्वमूलम्, व्यभिचारादसाधकमित्युचितम्, किन्तु तत्रैव, नत्वन्यत्र व्यभिचारा-दन्यत्रेति ।

साध्यसमे तु मानान्तरसिद्धस्य मानान्तरसिद्धात् किञ्चित्साधर्म्यात् साध्य-व्याप्तादुपसंहारसिद्धेः वैधर्म्यात्तु लिङ्गासिद्धत्वादेर्न प्रतिषेध उक्तरूप इत्यर्थः । नहि पक्षादीनां तत एव लिङ्गात् सिद्धिरनुमानाङ्गम्, व्याप्तिपक्षधर्मतयोः सिद्धौ तद्वि-शिष्टलिङ्गसिद्धिः, तत्सिद्धौ तस्मात् पक्षदृष्टान्तयोः सिद्धिः, तयोश्च सिद्धौ व्याप्ति-पक्षधर्मतयोः सिद्धिरिति चक्रकापत्तेः । व्याप्तिपक्षधर्मताविशिष्टलिङ्गसिद्धौ पक्षसप-क्षयोः सिद्धिः, तत्सिद्धौ च तद्विशिष्टलिङ्गसिद्धिरित्यन्योन्याश्रयापत्तेः । अन्यथा जात्युत्तरस्याप्येवम्भूतदूषणाक्रान्तेः । तदिदमयुक्ताङ्गाधिकत्वम्, पक्षादीनां सिद्धानाम-नुमानाङ्गत्वेऽप्येतल्लिङ्गसिद्धत्वस्याप्युक्तस्याङ्गत्वोपगमात् । न चैवं लिङ्गस्याप्रयोज-कत्वम्, न हि तत्सिद्धिजनकत्वमेवास्य प्रयोजकत्वम्, किन्तु निरुपाधिः सम्बन्धः ।५।१।५।

वर्ण्यावर्ण्यसाध्यसमेषु व्याघातान्तरमपि सूत्रयति—

साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ।५।१।६।

अप्रतिषेधार्थकर्षणार्थश्चकारः । इहैवं जातिवादी प्रष्टव्यः, किं भवान् वास्तवीं पक्षसपक्षलिङ्गानां स्थितिमास्थाय एवं प्रत्यवतिष्ठते, व्यावहारिकीं कामपि, न चेत् किमनेन । स्वेच्छाप्रसूतकल्पनामात्रसुलभतया[ऽ]नादेयत्वात् ।

सिद्धेन चातिदेशादवर्ण्यसिद्धस्येति न्यायात् । कुतश्चित् सिद्ध एव दृष्टान्तो-ऽसिद्धश्च साध्यमिति तयोः स्थितिः । एवं सति दृष्टान्तेऽप्यसिद्धार्थत्वादीनामङ्गत्व-मिच्छतो व्याघातः । तेषां यथोक्तस्थितिविरोधित्वात् । न च यद्यत् सिद्धिविरोधे [धि] तदेव तस्यां लिङ्गमिति सम्भवति । तथा च यस्मिन् सति यन्न भवत्येव तत्सिद्धौ

तदङ्गमिति ब्रुवतः कथं न व्याघातः। एवं साध्यस्थितिविरोध्येव सिद्धार्थत्वादि तदङ्गमिति ब्रुवतोऽपि।

सूत्रार्थस्तु साध्यातिदेशाभ्युपगमाद् दृष्टान्तस्योपपत्तिरभ्युपगमो यतः, ततो न प्रतिषेधः। यद्वा दृष्टान्तस्योपपत्तेः साध्यसाधनवत्त्वादिनासिद्धेः, पक्षे साध्यस्यातिदेशो ज्ञापनं यतोऽतः प्रतिषेधो न युक्त इत्यर्थः। तथा च सिद्धस्य वर्ण्यत्वापादने, असिद्धस्य वावर्ण्यत्वापादने, असिद्धस्य भावत्वापादने मानान्तरसिद्धस्य तत्प्रयोगसाध्यत्वापादने च व्याघातः।

केचित् षण्णामपि जातीनामिदं प्रत्युत्तरसूत्रम्, समुच्चयार्थे चकार [:] स्वरसात्। तथा हि उत्कर्षसमे दृष्टान्तस्योपपत्त्या[1] साध्यं व्यापकमिति दिश्यते। न च रूपादिसत्त्वं तथेति नोपसंह्रियत इत्यर्थः। एवमपकर्षसमे दृष्टान्तोपपत्तौ साध्यं[2] व्यापकमिति दिश्यते। न च सहचरितमात्रव्यावृत्तिः। सहचरितान्तरव्यावृत्तेः व्यापिकेत्यर्थः। एवं विकल्पसमेऽपि दृष्टान्तस्य व्याप्यव्यापकत्वेनोपपत्तेः प्रसिद्धेः साध्यस्य व्यापकस्यातिदेशः साधनम्। किञ्चिच्च कस्यचिद्व्याप्यं, व्यापकं, एवं किञ्चित् प्रति किञ्चिद्व्यभिचारि, न सर्वः सर्वं प्रति, अन्यथा तवापि स एव व्याघातः इत्यन्य इत्याहुः ।५।१।६।

[प्राप्त्यप्राप्तिसमजातिद्वयप्रकरणम्]

साध्यसमलक्षणज्ञानस्य सम्बन्धविषयत्वेन सम्बन्धविशेषणकव्याप्तिसमज्ञान[3] हेतुत्वं प्राप्तिज्ञानस्य चाप्राप्तिबुद्धाविति संगत्या प्राप्त्यप्राप्तिविकल्पोपक्रमजातिद्वयप्रकरणमारभते।

**प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ।५।१।७।**

प्राप्य निरूप्य जातित्वं प्रकरणार्थः। प्राप्तिनिरूप्यत्वस्यातिप्रसक्तस्यापि[4] रूपस्य प्रकरणार्था[र्थता]वच्छेदकत्वात्तात्पर्यविशेषस्य नियामकत्वात्। क्त्वा प्रत्ययस्य समानकर्तृकक्रियान्तरगर्भत्वात् क्रियान्तरापेक्षायां प्राप्याप्राप्य वेति विकल्पानन्तरं साधकत्वमिति प्रथमान्ताध्याहारे यद्यप्यनन्वयः, तथापि हेतोरित्यनन्तरं यदा तदेत्यध्याहार्यम्। तस्य सूत्रे गुणत्वात्।

यद्वा साधकत्वे इति सप्तम्यन्तमध्याहार्यम्। यद्यपि लक्षणे विकल्पो व्यर्थः, तथापि जात्युत्थानकथनार्थं विकल्पोपक्रमः। प्रतिषेध इति प्रकृतम्। तदन्वयः साधर्म्य-

---

१. उपपत्तौ ख।

२. असाध्यं ख।

३. ज्ञाने ख।

४. धूमप्राप्तिनिरूप्यान्योऽपि भवितुमर्हति, तथापि प्रकरणवशात् तात्पर्यविषयत्वविशिष्टत्वं निवेश्यम्। तेन नातिप्रसक्तिः।

समादिसूत्रवत्। सिद्धिरुत्पत्तिर्ज्ञप्तिश्च तद्विषय:। साध्यं कार्यं ज्ञाप्यञ्च। प्राप्तिः प्रत्यासत्तिः। सा च [सं]योगसमाधाय[समवाय]व्याप्यत्वविषयत्वाद्यनेकरूपा। अविशेषतः सिद्धिविरोधिरूपम्। तच्च कार्यविषये सत्त्वं ज्ञाप्यविषये ज्ञातत्वम्। न च सिद्धिसमागममात्रेणानुगमाभावः[1]। सिद्धिप्रयोजकरूपविशेषाभावत्वेन देशमा[अनुगमा]दावृत्ते र्वा। लक्षणन्तु साध्यप्राप्तिमात्रबलेनाविशेषाभिधानं प्राप्तिसमः। तेन यत्र व्याप्तिपुरस्करात् सदुत्तरमेव तत्र नातिव्याप्तिः। विशेषः सिद्धिप्रयोजकरूपम्। तदभावोऽविशेषः। स तु कारणवत् कार्यस्यापि विद्यमानता, ज्ञाप्यस्य तु ज्ञातता, गङ्गासागरवदभेदो वा साध्यव्याप्तिबलेनातिप्रसङ्गात् [ङ्गाभावात्] साधकदोषाभिधानमप्राप्तिसमः।

एवञ्च प्रवर्तते लिङ्गज्ञानस्य कार्यमनुमितिज्ञानं, तच्च कार्येणाप्राप्तं न जनकमतिप्रसङ्गादिति तेन प्राप्तं कारणम्। सच्च प्राप्यते, नासदिति कारणवत् कार्यस्यापि सत्त्वाविशेषान्न कार्यकारणभावः। नहि सदेव जन्यते, तथा तन्तवः पटस्य कारणं ते यदि पटं प्राप्तास्तर्हि तदभिन्ना एव। यथा सागरं प्राप्ता गङ्गा न ततो भिन्ना। एवमप्राप्य ज्ञापनेऽतिप्रसङ्गात्, प्राप्यज्ञापनं वाच्यम्। न च लिङ्गज्ञानस्य लिङ्गिना संयोगादिः प्राप्तिरिति विषयित्वरूपा प्राप्तिर्वाच्या। तथा च लिङ्गज्ञान एव लिङ्गिनः स्फुरणे ज्ञातत्वाविशेषान्न तयो र्ज्ञापकाभावः [ज्ञाप्यज्ञापकभावः] एवं निषेध्यं ज्ञाप्यम् [च]। यथा भूतले घटः प्रसक्तः। प्रसक्तिश्च प्राप्तिरेव, तथा च द्वयोरविशेषे भूतलवत् सोऽपि विधेय एवेति न युक्तः प्रतिषेधः।

अथाप्राप्त एव घटः प्रतिषिध्यते, तर्हि उपसर्गस्यैव प्रतिषेध इत्यतिप्रसङ्ग एव। एते एव विपर्ययेणाप्राप्तिसमे। कारणं ज्ञापकं वा न प्राप्य तथा, अविशेषादित्यप्राप्य तथेति वाच्यम्, तच्च न, अतिप्रसङ्गात्, नहि, अप्राप्तोऽग्निः दहति, प्रदीपो वा ज्ञापयतीति। केचिद्विशेषव्याप्तिप्रतिक्षेपेणैवमाहुः। तथा हि साधनविशेषः साध्यविशेषणे व्याप्तो न वा, न चेन्न तं गमयेदिति प्रसङ्गत्वा [ङ्गा] त्, व्याप्तश्चेत् व्याप्यत्वेनाज्ञातः तं गमयेदतिप्रसङ्गादिति लिङ्गविशेषवत् साध्यविशेषोऽपि व्याप्तिग्रह एव विषयः, तन्निरूप्यत्वाद्व्याप्तिरित्यनुमेयाभावः। तथा करणादि कर्म्मप्रत्यासन्नं साध्यसाधनसमर्थनञ्च[र्थम्]लिङ्गज्ञानस्य करणस्य साध्यविशेषणसंयोगादिः प्रत्यासत्तिरित्यप्राप्त्या नेदं साध्यसाधकमिति ज्ञप्तिमात्रपर्यवसिते भ्रासे[?] न च कृतिज्ञप्तिसाधारण्यमिति। तन्न। उक्तलक्षणेन संग्रहादवधारणस्यान्याय्यत्वात्। अवान्तरवचनभङ्गिभेदानामानन्त्यात् अप्राप्तिसमा प्राप्तिसमान्तर्भूता [या] प्राप्तेरेवात्र निरूपकत्वादिति चेत्, न, प्राप्त्यप्राप्तिपुरस्काराभ्यां[2] प्रत्यवस्थानभेदस्य स्फुटत्वात्। तदत्र प्राप्तिसमायामप्राप्ता न साधनरूपविशेषोद्धारो हेतुर्दूष्यः।

---

१. शब्दसाम्यमात्रेण ख।

२. क मातृकात्र त्रुटिता।

निर्वर्तितक्रियै[क]कर्म्मणि साधनस्यासाधनन्यायातिपातमुखेनासाध[न][साध्य]त्वमारोप्यम्। तच्चापाततः प्रतिकूलतर्काभासत्वम्। तदवसाने तु साधनप्रवृत्तेः। साध्यप्रागभावावान् कालः साध्यसिद्धौ सहकारीष्यते। तस्याञ्च दशायां साध्यसाधनयोरसम्बन्धादसंबद्धस्य जनकत्वेऽतिप्रसङ्गात्। [सिद्धदशायां साध्यसाधनयोः] द्वयोरपि सत्त्वे किं कस्य साधनमित्युचितकालरूपसहकारिविरहात् विशेषणासिद्धत्वम्, तदाभासा चेयम्। स्वप्राप्तिसमयान्तरप्राप्तावविशेषो द्वारं, कृतस्य करणायोगादकृतस्य करणं वाच्यम्। तथा चाविशेषान्नियमानुपपत्तेरकारकत्वं वा हेतु दूंष्यः। अत्राप्यापाततः प्रतिकूलतर्काभासदेशनाभासनिष्ठायां प्राप्तिलक्षणा विशेषणासिद्धिदेशनाभासा चेयम्।५।१।७।

अत्र प्रत्युत्तरसूत्रम्—

**घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ।५।१।८।**

स च [न] मिथः प्राप्तानां स्वरूपहानिः, गङ्गासागरवत्। सागरप्रवेशेऽपि गङ्गायाः स्वरूपस्थितेः। नापि स्वरूपाभेदस्तद्वदेव तत्रत्यभेदाभिमानः सौसादृश्ये भेदानाकलनात्। विषक्तावयवतया यथा तयोर्व्यूहभङ्गः तथा सर्वत्र स्यादिति चेन्न। मिथः प्राप्तावप्य००[प्राप्तव्यूहै]रसंकीर्णस्वरूपैरेव दण्डादिभिः घटादिनिष्पत्तिदर्शनात्। द्वितीयप्राप्तिर्यदि कार्यकारणभावस्तदोमित्युच्यते[1]। नह्येवमभेदो वा स्वरूपासत्त्वं वा प्रसंजयति। न च फलेन प्राप्तिः संयोगादिः साधनानां तत्प्रत्यङ्गम्, अन्योन्याश्रयापत्तेः। दण्डादिभ्यो घटादीनां स्वकारणैनैव प्राप्तानामेव निष्पत्तिदर्शनात्। अतिप्रसङ्गभयान्मयामभ्युपगम[०यात् सामग्र्यभ्युपगम]इति चेन्न, स्वाभाविककारणशक्तेर्नियामकतया दण्डादिभ्य एव घटादिनिष्पत्तिदर्शनात्। अन्तत आदिपदसंगृहीतस्य त्वदभ्युपगमस्याप्राप्तिरेव, साधनैर्निष्पत्तिदर्शनात्। तदिदमयुक्ताधिकत्वम्। फलप्राप्तेरयुक्ताया[2] अङ्गत्वेनोपगमात्। अविषयववृत्तित्वं वा। प्राप्तिविशेषधर्मस्य व्यूहघातित्त्वस्य प्राप्त्यन्तरे सञ्चारणात्। ज्ञप्तिपक्षे तु लिङ्गस्य धर्मिणा संयोगादिः प्राप्तिरिष्यत एव। साध्येनापि सर्वोपसंहारे[ग्रहे]णव्याप्तेः प्राप्तिरस्ति ज्ञायते च। विशिष्य तदज्ञानमिति चेत्, किमितः। नहि विशेष्यविशेषणयोर्व्याप्तिरनुमानाङ्ग[म]विज्ञानादपि घटादिनिष्पत्तिदर्शनात्। आदिपदसंगृहीतेनासाधकतानुमानेन विशेषासाधकत्वस्य त्वयैवाभ्युपगमाच्च।

एवमभावसिद्धौ प्रतियोगिनोऽधिकरणप्राप्तावपि वाच्यम्। तस्याञ्च सत्यामभावो न स्यात्, किं गृह्येत। न चेष्टापत्तिः, आदिपदसंगृहीतस्याभावज्ञानस्य निष्पत्तिदर्शनात्। तदिदमविषयवृत्तित्वम्। व्याप्तिज्ञानं व्यङ्ग्यमेव। न तु विशेषविषयम्।

---

१. तदा ख।

२. अयुक्तयो ख।

अयुक्ताङ्गाधिकत्वं वा । पक्षसंबन्धिसाध्यविशेषोल्लेखित्वस्य[1] ज्ञाप्तिज्ञाने[2] विशेष्य [ष]स्याभावे च प्रतियोगिनोऽधिकरणप्राप्तेरसङ्गस्येवाङ्गत्वकल्पनात् । तथापि लिङ्ग-ज्ञानस्य न साध्यधर्मेण विषयत्वरूपाप्राप्तिरस्तीति चेन्न । द्विविधं हि विषयत्वम्—प्रतिपत्त्यनुबन्धितया साक्षात्तदीयमात्रपुरुषविशेषरूपत्वम्, व्यापारानुबन्धितया तत्, तथाविधव्यापारे जनकत्वरूपम् । तत्राद्यस्याभावेऽपि द्वितीयं विषयत्वमस्त्येव । तदिदमयुक्ताङ्गाधिकत्वम् । लिङ्गज्ञानस्य साक्षात् साध्यधर्मविषयत्वस्या[युक्तस्या] ङ्गस्योपगमात् । अविषयवृत्तित्वं वा । लिङ्गज्ञानमङ्गमेव, न तु साक्षात् साध्यविषय-तयेति । एतेनाप्राप्तिसमाऽपि निष्ठा [अनिष्टा] ।

तथा हि किं सर्वथैवाप्राप्तस्यासाधकत्वं, साक्षादप्राप्तस्य वा । आद्ये सिद्ध-साधनम् । द्वितीयेऽतिप्रसङ्गः । घटादिनिष्पत्तिदर्शनात् । यथाकथञ्चित् स[ति तत्-स्यादिति]सामग्रीनियतत्वात् । अन्यथा तवाप्युत्तरानुत्थानात् स एव व्याघातः । तथापि कारणं कर्मणा साक्षात् प्रत्यासन्नमेव फलं जनयतीति चेन्न, अभिचारात् [अभिचारे व्यभिचारात्] । तत्र हि पीड़नस्याभिचारेण कर्मणा साक्षात्संबन्धाभावेऽप्यु-द्देश्यतामात्रेण कार्यदर्शनात् । सोऽयं युक्ताङ्गत्यागः । अन्वयव्यतिरेकोद्देश्यतादिप्रत्या-सत्तेरवधारणादिति ।५।१।८।

[युगनद्धवाहिप्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम्]

अप्राप्तिसमज्ञानस्याभावविषयता तद्विशेषणकप्रसङ्गमवधीहेतुत्वं, तद्बुद्धेश्च सम्बन्धविषयताया साधनघटितप्रतिदृष्टान्तसमधीहेतुरूपतया संगत्या सूत्रम्—

**दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्ग-प्रतिदृष्टान्तसमौ ।५।१।९।**

प्रकरणार्थस्तु व्यवस्थितिनिरूप्य जातिलक्षणम् । व्यवस्थितिश्च सिद्धत्वं पूर्व-वन्नातिप्रसङ्गः । दृष्टान्तपदमजहत्स्वार्थलक्षणया सिद्धपरम् । कारणं कृतिज्ञप्त्यो र्ज्ञापकम् । तदयमर्थः—कृतिज्ञप्त्योर्व्यवस्थितस्य कारणं ज्ञापकं, तस्यानपदेशादनिर्दे-शात् प्रत्यवस्थानं प्रसङ्गसमः ।

नन्वेतत् सदुत्तरमेव, असिद्ध्युद्भावकत्वात् । न च स्वव्याघातकत्वं विशेषणं, प्रसङ्गमात्रात्, अव्याघातकत्वमुत्कर्षसमादावपीति तस्यैतद्विशेषत्वापत्तेः । नाप्यनव-स्थाभासञ्जसत्वेन[प्रसञ्जनत्वेन]विशेष्यं, बीजाङ्कुरादावनस्थाभासप्रसञ्जनेऽपि जात्यु त्तरत्वाभावेनातिव्याप्तेः, सूत्रेऽनवस्थाया अश्रवणाच्च ।

---

१. विशेषोल्लेखेत्वस्य ख ।

२. प्राप्ति ख ।

मेवम् । तत्कालप्रमाणव्यवस्थितमेव तत्कालीनसाध्यव्यवस्थापकमित्यभिमानेन व्यवस्थापकानवस्थाप्रसञ्जनं प्रसङ्गसम इत्यर्थात् ।

यद्यपि सूत्रेऽनवस्था न श्रूयते, तथापि प्रत्युत्तरसूत्रे प्रसङ्गविनिवृत्तिवदिति श्रवणात् प्रसङ्गेनापि[नि]वृत्तेः प्रत्यवस्थानमिति लभ्यते[1] । प्रसङ्गमात्रे विपद-वैयर्थ्यात् । अ[स्व]साधकविशिष्टसाधकत्वपुरस्कारेणानवस्थाप्रसञ्जनं वा प्रसङ्गसमः । अनवस्थाप्रसङ्गेन स्वव्याघातकमुत्तरमिति वा । व्यवस्थापकप्रसङ्गेन स्वव्याघातक-मुत्तरं प्रसङ्गसमः । तेनानवस्थाप्रसञ्जनेऽपि जातिविषयमित्यप्याहुः ।

अनवस्था च न सजातीयस्य सजातीयान्वयाङ्गीकारे बाधकस्तर्कः, आत्माश्रये-ऽतिव्याप्तेः । स्वभिन्ने विशेषणे परस्पराश्रयेऽतिव्याप्तेः । विजातीयसम्बन्धान ०[न्वये]पि क्वचिदनवस्थानाच्च । किन्तु प्रतिपत्तिप्रयोजकरूपत्वेनापाद्यापादनं सा । तत्र कृतौ कारणेऽपि किं कारणं व्यवस्थापकं, ज्ञप्तौ तु किं प्रमाणेऽपि प्रमाणं, दृष्टान्तेऽपि को दृष्टान्त इत्येवं प्रवर्तते, किं पुनरेतदुत्थानबीजम्, एवं प्रश्नपरम्परायाः निर्दोषत्वे क्वापि कथापर्यवसानं न स्यादिति तत् फलापर्यवसानापत्तेः कथारम्भानुपपत्तिः । ज्ञप्तावनिश्चितस्यानिश्चायकत्वारोपः । घटसत्तां हि व्यवहरता प्रमाणे[न] केन तत्र प्रमाणसद्भावो वाच्यः । तेन विना तत् सत्त्वे वैपरीत्यमेव किं न स्यात् । ततश्च प्रमाणसत्ताऽपि न तत्र प्रमाणं विना स्वीकारार्हा । सर्वप्रमाणनिवृत्ते वंस्तुसत्ता निवृत्तिनियतत्वात् । अन्यथा घटसत्ताया-मपि वृथा प्रमाणोपन्यासः । लिङ्गस्य धूमादेर्यथा सातत्योर्द्ध्वगमनाविच्छिन्नमूल-त्वादिकं ज्ञातं प्रयोजकम्, तथा ज्ञातत्वमपि यद्विज्ञातं प्रमित्यौपयिकं तद्विशेषणमपि तथेति व्याप्तेरित्यभिमानो वा । तत्र लिङ्गस्वरूपानिश्चये स्वरूपासिद्धिस्तद्विशेषणा-सिद्धिरारोप्या । कृतौ तु कारणस्यापि कारणं वाच्यम् । न हि तत् सर्वथैव नित्यमा-कस्मिकं वा, अस्मादेव वा, कार्यस्य सदातनत्वापत्तेः । हेतु[?]त[स]द्धेतोरपि सदा-तनत्वप्रसङ्गात् । कार्यस्यापि तथाभावप्रसङ्गाच्च । नापि प्रागभाव एव कारणं, तावन्मात्राधीनत्वे प्रागपि कार्योत्पत्त्यापत्तेः । एवं कारणकारणेऽपि वाच्यम् । कृति-ज्ञप्तिवत्तृतीयापि विपरीतप्रसक्तिका प्रसङ्गसमेति **केचित्** । यथा भूतले घटो नास्तीति । नह्यप्राप्तिः किञ्चिन्निषिध्यते ।

**यदाहुः**—लब्धरूपं क्वचित् किञ्चित्तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य सम्भवः ॥ इति ।

लब्धरूपता चोपलब्धत्वम् । ततश्चाभावप्रतियोगिन उपलब्धत्वं वाच्यम् । न च घटमात्रं प्रतियोगि, किन्तु घटभूतलवर्तमानसंसर्गः, संसर्गीभावत्वात् । तस्य चोपलब्धि र्नास्मृतिः [?] अननुभूतत्वात् । नाप्यनुभूतिः, असत्ख्यात्यापत्तेः । तथा[च] भूतले घटसत्त्वप्रसङ्ग इत्याकारेति । तन्न, यथोपदर्शितविपरीतप्रसङ्गसमपरतयैतत् सूत्रस्य भावयितुमशक्यत्वात् । क्व तर्ह्यन्तर्भवति, प्राप्तिसमायामेव । तत्र हि

१. लभते ख ।

साध्यं कार्यं ज्ञाप्यञ्चेत्युक्तम् । ज्ञाप्यं द्विविधम्—विधेयं निषेध्यञ्च । तत्र हि निषेधज्ञापकं न प्रतिषेध्यमप्राप्यम्, प्रतिषेधस्य प्राप्तिनिवृत्तिलक्षणत्वात् । ततः प्राप्य वक्तव्यम्, तदपि नास्ति, अविशेषात् । को विशेषसत्त्वम् । न च भाष्यकारादि वद [भिर] नुदाहृतत्वान्नेयं प्राप्तिसमा । प्राप्ति [समायाः] प्रत्युत्तरसूत्रे वार्तिककृता दर्शितत्वात् ।

यदाह यदिदमुत्तरम्, प्राप्य वाऽप्राप्य वेत्यस्यापि प्रतिषेध्यं, प्राप्याप्राप्य वेति समानो दोष इति । सेयमापाततोऽनवस्थादेशनाभासामुखेन पक्षे, अप्रसिद्धविशेषण-विशेष्योभयत्वेन हेतौ, तद्विशेषणाप्रसिद्धत्वेन[1] दृष्टान्ते साध्यसाधनोभयविकलत्वेन तद्देशनाभासेयम् । एवमसाधकमिदं, व्यभिचारित्वादित्यादावपीयं प्रवर्तते । व्यभिचारित्वादावेव किं मानम् । न ह्यसिद्धो व्यभिचारादि साधकत्वे लिङ्गमित्याशयादित्याहुः । कृतिपक्षे स्वकारणं विना कारणस्यासत्त्वारोप उत्थानबीजम् । ज्ञप्तिपक्षे नायं वर्ण्यसमः साध्यसमो वा । साध्यदृष्टान्तधर्मविकल्पहेतुकत्वाभावात् । अनवस्था-प्रसञ्जनाभावाच्च नायमेताविति । प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रतिदृष्टान्तसमः । यद्यपि प्रत्यवस्थानं वचनं जातिरप्युत्तररूपा तदेवेति पञ्चम्यानन्वयात् प्रथमान्तमेव तदुचितम्, अथवा सामान्यलक्षणस्थितं प्रत्य[व]स्थानपदमनुवर्त्य तत्सामानाधि-करण्येनान्वयो वाच्यः, तथापि प्रतिदृष्टान्तेन अ [स्व] विषयाद्युपलक्षणे नियतप्रतीप-मवस्थानं तथा, ज्ञानादिकम्, तथा च प्रतिदृष्टान्तेन तज्ज्ञानेन यत् प्रतिदृष्टान्ताभिधानं तत् प्रत्यवस्थानं प्रतीपस्थापकत्वात् । तस्मात् प्रतिसाधननिषेधरूपः प्रतिदृष्टान्तसमः प्रत्यवस्थानमिति विभक्तिविपरिणामादन्वयः । प्रतिषेधपदाध्याहारात् विभक्तिविप-रिणामस्य न्याय्यत्वादिति चेन्न, प्रकरणादुपस्थिते प्रतिषेधे[ध्या]हाराभावात् । त्वयापि चावश्यं तदुपस्थितेर्वक्तव्यत्वात् । अन्यथा प्रतिदृष्टान्तसमः प्रतिषेध इति कथमन्वयः स्यात् । विपरिणामानुषङ्गयोस्त्वनुषङ्ग एव ज्यायान् । उपस्थिता[नु]-योगात् । ल्यब्लोपे पञ्चमीत्यन्ये । तेन प्रतिदृष्टान्तमात्रमालम्ब्य बाधप्रतिरोधान्यत-राभिधानं प्रतिदृष्टान्तसमः । प्रतिधर्मसमप्रकरणसमाभ्यामस्य भेदः, केवलप्रति-दृष्टान्तबलवृत्तित्वात् ।

भाष्ये [५।२।२] च शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्यमैन्द्रियकं नित्यमिति नित्य एवास्त्विति, हेतूपादानमुदाहरणमात्रप्रदर्शनाय । न तु हेतुरपि लक्षणे विवक्षितः । सूत्रे प्रतिदृष्टान्तमात्रश्रुतेः । किं पुनरुत्थानबीजमत्र, नहि युक्त्याभासमप्यप्रतिबन्धाय, प्रतिदृष्टान्तमात्रेण बाधप्रतिरोधावभिधातुमर्हति । एवं मन्यते जातिवादी । उदाहरणेन प्राधान्येन साध्यमुच्यते, साधनमुपसर्जनत्वेनेति । 'तथा चाय'मित्युपनयेन सर्वनाम्ना दार्ष्टान्तिके प्रधानस्य प्रत्यवमर्शाद्धेत्वभिधान-मनङ्ग [म्] । प्रधानमेव सर्वनाम्ना परामृश्यत इति व्युत्पत्तेः । नहि चैत्रो यथा दीर्घः, तथा मैत्रः खञ्ज इति, किन्तु तथा दीर्घ इति । तद्वद् यथा घटोऽनित्यः, तथा शब्दोऽनित्य इत्यतिदेष्टव्यम्; न तु यथा घटो नित्यः, तथा शब्दो [अ] कृतक इति ।

१. विशेषण ख ।

यद्वा हेतुर्बहिर्व्याप्तिबलेन साधको, अन्तर्व्याप्तिबलेन वा ? नाद्यः, तथा सति पक्षधर्मस्य व्यभिचारशङ्काक्रान्तत्वेन साधकत्वायोगात् । नान्त्यः, व्याप्तिग्रहणकाले व्यवहितावभासायोगात् । अवभासे वाऽनुमानवैयर्थ्यात् । तथा पक्षासंबद्धस्यागमकत्वेति प्रसङ्गः । संबन्धस्य च संयोगादिरूपतया मिथोव्यभिचारः । तथा विपक्षादव्यावृत्तो हेतुरनैकान्तिकः । व्यावृत्तश्चे[त्]काऽसौ व्यावृत्तिः; इतरेतराभावस्य स्वपक्षेऽपि सत्त्वात् । प्रागभावप्रध्वंसयोर्व्यभिचार एव पर्यवसानात् । अत्यन्ताभावे च वाजिविषाणाविशेषप्रसङ्गः । तथाऽव्याप्तस्यागमकत्वेऽतिप्रसङ्गः । व्याप्तिश्च तादात्म्यतदुत्पत्तिस्वाभाविकत्वानौपाधिकत्वनिरूपणाशक्यतया दुर्निरूपेत्यभिमानो बीजमत्र । यद्वा दृष्टान्तस्य साधकत्वे हेतुसम्बन्धो न प्रयोजकः । व्यतिरेकदृष्टान्ते व्यभिचारादित्यभिमानः ।

एवञ्च प्रवर्तते—यदि घटदृष्टान्तबलेनानित्यः शब्दो, अथाकाशदृष्टान्तबलेन नित्यः किं न स्यादिति प्रतिरोधपक्षे । बाधपक्षे तु घटदृष्टान्तबलेन नानित्यः शब्दः, आकाशदृष्टान्तबलेन नित्यस्यैव सिद्धेरिति । तस्य हेतोरप्रधानत्वेनानङ्गताभिमानोद्धारम् । दूष्यो दृष्टान्तः न हेतुः । तस्यास[न]ङ्गत्वाभिमानात् । बाधप्रतिरोधावारोप्यौ । तदाभासाचेयम् ।५।१।९।

प्रसङ्गसमदोषचर्चा सूत्रम्—

**प्रदीपोपादानप्रसङ्गविनिवृत्तिवत्तद्विनिवृत्तिः ।५।१।१०।**

इहैव प्रत्युत्तरक्रमः; व्यवस्थितमेव व्यवस्थापकमिति । किमिदं युक्तिसिद्धं लोकसिद्धं वा । नाद्यः, युक्त्यैव व्यभिचारात् । द्वितीये, किं व्यवस्थितं ज्ञातं, प्रामाणिकं वा । नाद्यः, प्रदीपे व्यभिचारात् । तस्य ज्ञातस्यापि ज्ञापकत्वात्, यदुक्तं लिङ्गज्ञानस्यापि ज्ञापकान्तरानुसरणव्यवस्थापत्तेः । नान्त्यः, इष्टापत्तेः । लिङ्गस्याज्ञातत्वमवश्यं ज्ञेयं, प्रमित्युपयोगिविशेषणत्वात्; इतरविशेषणवदिति चेन्न, व्यभिचारव्यावर्तकानामेव विशेषणानां ज्ञेयत्वनियमात्; न त्वात्ममनोयोगवत् सहकारित्वेनोपयुक्तानाम् ।

ननु जलमगन्धं, पाकजरूपरहितत्वात्, इत्यत्रासिद्धिवारकमपि तज्ज्ञातमुपयुज्यते । अथ तस्य व्यर्थविशेषणत्वेनासिद्धान्तर्भावः । प्रकृते त्वसिद्धिवारकत्वस्याप्यभावः । यद्वा विशेषणे तथा नियमः । तच्च समानाधिकरणमवच्छेदकं, इह तु रहितत्वे विशेष्ये रूपं प्रतियोगिनः विशेषणं, तस्य तदधिकरणत्वादित्युच्यते । न, धूमस्य हि व्याप्तत्वं विशेषणं ज्ञातञ्चोपयुज्यते । न च तद्व्यभिचारवारकम् । धूमत्वञ्च धूमविशेषणं ज्ञातमुपयुज्यते । न च तद्व्यभिचारावारकं धूमत्वं, विरहस्य रूपान्तरस्यासाधारणस्य तत्राप्युपस्थापकत्वात् । मैवम्, व्यभिचारवारकविशेषणानामेव ज्ञाननियमाऽभ्युपगमेऽन्यत्र ज्ञाननियमो नास्तीति विवक्षितत्वात् । किञ्च, न हेतोः सतो विशेषणस्य ज्ञानमुपयोगि, किन्तु यमन्तर्वाच्य[भाव्य]हेतुत्वम्, एवमनभ्युपगमे

५

जात्युत्तरस्याप्यनुत्थितेः। स्वयमेवार्थो लौकिकेन दृष्टान्तेन दृढ़ीकृतः। यथा लोके घटादिज्ञप्त्यर्थं प्रदीपोपादानं न तन्निश्चायकपरं परां प्रयोजयति, तथा हेतुदृष्टान्तोपादानमपीति। एवं कृतावपि विजातीयापेक्षापरम्परायामविच्छेदमात्रं न किञ्चिद्बाधते। नह्येवमसिद्धिर्बाधो वा कस्यचित्।

अथ सजातीयापेक्षा नियम उच्यते, तर्ह्युक्तमेवोत्तरम्। न हि प्रदीपः प्रदीपान्तरादेवोत्पद्यते। प्रथमे युक्ताङ्गत्यागः, प्रसञ्जनीयस्यानिष्टत्वमवधार्य प्रसङ्गप्रवर्तनात्। द्वितीये तु पूर्ववदङ्गाधिक्यं, प्रदीपवत्, सजातीयप्रकाश्यत्वस्याङ्गस्य दृष्टान्तेन[ा]भ्युपगमात्।५।१।१०।

प्रतिदृष्टान्तसमे प्रत्युत्तरसूत्रम्—

**प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः।५।१।११।**

इहैवं प्रत्युत्तरक्रमः। प्रतिदृष्टान्तस्याधिकरणत्वमभिमत्य तेन दृष्टान्तबाध आपद्यते न वा। नाद्यः, साध्यव्यापकसाधनमवधीर्य वादिविवक्षितधर्मवत्त्वमात्रेण दृष्टान्त[प्रतिदृष्टान्त]योर्विशेषाभावात्। नेति पक्षे तुल्यबलस्याबाधकत्वात्। बाधकत्वे वा दृष्टान्तेनैव प्रतिदृष्टान्तबाधापत्तिरिति व्याघातः, तदिदमाह **प्रतिदृष्टान्तस्य हेतुत्वे** साधकत्वेनाभ्युपगम्यमाने, **दृष्टान्तो नाहेतुर्**नासाधक इत्यर्थः। तदिदं युक्ताङ्गहीनत्वम्। बाधं प्रत्यधिकबलत्वस्य युक्तस्याङ्गस्यानपेक्षणात्। प्रतिरोधे तु विशेषग्रहे प्रतिरोधः, तदग्रहे वा। आद्ये दृष्टान्तस्य तदधीनत्वात्। तदत्र पक्षेऽयं सूत्रार्थः—प्रतिदृष्टान्त एव हेतुः प्रतिदृष्टान्तहेतुः, नाधिकस्ततो हेतुरस्तीति यावत्। तस्य हेतुहीनत्वे यदि दृष्टान्तोऽपि तादृशः स्यात्तदा तेन प्रतिरोधः स्यात्। नत्वहेतुरविद्यमानहेतुर्दृष्टान्त इति केवलेन प्रतिदृष्टान्तेन प्रतिरोधासम्भवः। दृष्टान्तहेतुमत्त्वेनाधिकबलत्वात्तेन बाध एव स्यात्। तदयं चकारार्थः। त्वद्दृष्टान्तेऽपि प्रतिदृष्टान्तसत्त्वाव्याघातः। तदिदं युक्ताङ्गहीनत्वमस्य हेतोः, युक्तस्यैवाङ्गस्यानपेक्षणात्। अ०द्युमानविशेषत्व[अविद्यमान]विशेषस्य वा प्रतिरोधाङ्गस्यानपेक्षणादिति।५।१।११।

[अनुत्पत्तिसमप्रकरणम्]

[1]अभावोपरयुक्ता[अभावप्रयुक्ता]नुत्पत्तिसमज्ञाने स्व[अ]भावविषयप्रतिदृष्टान्तज्ञानस्य हेतुत्वादनन्तरमनुत्पत्तिसमसूत्रम्:—

**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः।५।१।१२।**

---

१. न्यायसूत्रविवरणग्रन्थटिप्पण्याम्—"अनुत्पत्तिसमज्ञानेऽभावविषयप्रतिदृष्टान्तज्ञानस्य हेतुत्वादनन्तरमनुत्पत्तिसमसूत्रम्। प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसम इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः" इत्ययं पाठः दृश्यते।

यस्यकस्यचित् साधनाङ्गस्योत्पत्तेः प्राक् कारणस्य हेतोरभावात् प्रत्यवस्थानमनुत्पत्तिसम इति यथाश्रुतम्। यद्यपि ध्वंसावस्थायां हेत्वभावेन हेतुवैकल्योद्भावनेन प्रत्यवस्थानाव्यापकं, तथापि, असदवस्थायां तदवृत्तित्वेन तदङ्गवैकल्योद्भावनमनुत्पत्तिसमः। एवं धर्मिलिङ्गसाध्यदृष्टान्ततज्ज्ञानानां सत्त्वं व्याप्यते। एतद्विशेषणसम्बन्धयोरेभिरेव संग्रहान्न प्रकारान्तरसम्भवः। तत्राद्यमुदाहरणम्—

शब्दोऽनित्य उत्पत्तिधर्मकत्वादित्युक्ते यावच्छब्दो नोत्पद्यते तद्दशायामपि तस्य शब्दस्य शब्दवाच्यतया पक्षत्वादुत्पत्तिधर्मकत्वस्य हेतावसिद्धत्वे वाश्रया-[सिद्धिः]भागासिद्धिः।

ननु कथमिदं जातिः, यदि ह्यनेन सकलकालीन एव शब्दः पक्षीकृतः, तदा सदूषणमेव। अथ न तदातनया[?] पक्षः[1] तर्हि तदातनया[?]परस्य[2] पक्षत्वविवक्षामारोप्य प्रत्यवस्थानमितिच्छलमेव। अनारोपे प्रत्यवस्थानमनवकाशमेव। मैवम्, अनुत्पत्तिदशाकस्य पक्षत्वारोपेऽपि शब्दतात्पर्यासंहारेणाच्छलत्वाद्भागासिद्ध्यापादनस्यासदुत्तरत्वात्। वस्तुतो व्याघात एव [प्र] सञ्जनीयः, उत्पत्तेः प्रागनुत्पत्तिधर्मकत्वव्यवस्थितौ शब्दे उत्पत्तिधर्मकत्वैकमानकस्यानित्यत्वस्य व्यावृत्तेः। कालान्तरे ह्युत्पत्तिमत्त्वानित्यत्वयोरभ्युपगमे विरोधात्।

द्वितीयं यथा, इदं गुरु, पतनत्वादित्युक्ते पतनोत्पत्तेः प्रागवस्थायामपतनसिद्धौ व्याघातः। न ह्यपतनधर्मकं गुरु भागासिद्धिश्च, पक्षैकत्वेऽपि तत्तत्कालविशिष्टस्य पक्षत्वात्तदापि गुरुत्वस्य साध्यत्वमित्यभिमानात्। तृतीयम्, इदं गन्धवत् पार्थिवत्वादित्युक्ते प्रथमे क्षणे गन्धस्य व्यापकस्याभावादगन्धस्य पार्थिवत्वे व्याघातः। तत्कालविशिष्टस्यापि पक्षत्वाद्भागासिद्धिः। [तत्कालविशिष्टे घटे पार्थिवत्व] सिद्धौ वा बाधितविषयः स्यात्। चतुर्थम्, आत्मा द्रव्यं गुणवत्त्वात् घटवदित्युक्ते प्रथमक्षणे निर्गुणो घटः कथं द्रव्यमिति व्याघातः। दृष्टान्तस्य भागे यासिद्धिः तत्क्षणविशिष्टस्यापि दृष्टान्तत्वाभिमानात्। पञ्चमं, वायुः द्रव्यं स्पर्शवत्त्वादित्युक्तेऽज्ञातस्यापि वायोः द्रव्यत्वं विवक्षितम्। न च तत्रायं हेतुरुपलब्धवृत्तिरित्यनुपलब्धहेतुकं साध्यमिति व्याघातः। अज्ञातभागेचासिद्धिः। तदवस्थस्यापि पक्षत्वाभिमानात्। तदयं सूत्रार्थः—उत्पत्तेः प्राक्काले कारणाभावादुत्पत्तिर्नास्तीति कारणान्तरेऽपि तदुत्प०-[त्य]भ्युपगमो विरुद्धः। तथा कारणाभावात्, प्रमाणाभावादुत्पत्तेः पूर्वमनित्यतया शून्यस्य, नित्यत्वसिद्धौ तद्विरुद्धानित्यत्वोपगमे व्याघात इति प्रागुत्पत्ते धर्माभावे कालान्तरेऽपि तद्विरुद्धधर्मो[र्म]योगो[ऽनित्यत्वरूपो]नोपपद्यत इत्यभिमानो बीजमत्र। केचिद्यथा—असत्वविशिष्टे शब्दे प्रयत्नानन्तरीयकत्वं न प्रवर्तत इति प्रसङ्गो जात्यन्तरं स्यादिति विशेषणान्तर्वर्ति, तदवृत्तित्वे न तत्प्रमाणाङ्गवैकल्योद्भावनमनुत्पत्तिसम इत्याहुः।

---

१. तदानींतनः शब्दः
२. अतदानींतनस्य

अपरे तु तत्तत्कारणात् तत्तदुत्पत्तिः, न कारणमात्रात् । तत्कार्योत्पत्तेः प्राङ् [न] तत्कारणम्, विशेषणाभावे विशिष्टाभावात् । उत्पन्ने च कार्ये तत्कारणसिद्धावपि किम्, उत्पन्नस्यानुत्पत्तेः । तेनोत्पद्यमानप्रकाशे तत्सम्बन्धाभावात् कारणत्वाभिमतानामकारणत्वापादनमनुत्पत्तिसमः । एतच्च कारणज्ञापकयोस्तुल्यमित्याहुः ।

अन्ये तूत्पत्तेः पूर्वं विवक्षितधर्मसम्बन्धविरहादुत्पन्नेऽपि तस्मिंस्तद्धर्मनिरसनमनुत्पत्तिसमः । तद्यथा—अनुत्पन्नस्य शब्दस्य साधनसम्बन्ध उत्पन्नस्य वा ? नाद्यः, तस्यासत्त्वात् । नान्त्यः, किमुत्पन्नादन्यो[1], अन्यो वा ? आद्येऽनुत्पन्नादन्यस्योत्पत्तावुत्पन्नस्यैवोत्पत्तिः स्यादित्यन्योन्याश्रयः । उत्पन्नत्वे सत्युत्पत्तिः, उत्पत्तौ च सत्या-[म] नुत्पन्नत्वमित्युत्पन्नस्य सिद्धत्वात् । कारकसम्बन्धविरोधश्च । द्वितीये च, कथं तस्य साधनसम्बन्धः, असत्वात् । तदेवं हेतुसम्बन्धासिद्धावसिद्धिः, साध्यसंबन्धासिद्धौ बाधितत्वम् । सपक्षस्य साध्यसाधनसम्बन्धनिराकरणे साध्यसाधनवैकल्यम् । तेनानुत्पन्नस्याभेदे विवक्षिते धर्मसम्बन्धनिरसनमनुत्पत्तिसम इत्याहुः । तन्न, नित्यसमान्तर्भावस्यैवंविधे वक्ष्यमाणत्वात् ।५।१।१२।

दोषचिन्ता सूत्रम्—

**तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ।५।१।१३।**

**उत्पन्नस्य** कार्यस्य **तथाभावः**-शब्दादिभावः, तस्य च पक्षत्वं, तत्र च कारणस्य हेतोरुपपत्तेः, प्रमाणान्निश्चितः संबन्धः । अतो हेतोः न व्याघातः, भागासिद्धिरूपः प्रतिषेध इत्यर्थः । शब्दो हि पक्षः, नचानुत्पत्तिदशायां शब्दः, भावानां स्वप्रागभावसमानकालत्वविरोधात् । नचानुत्पन्नः शब्दो, विनष्टः शब्द इति सामानाधिकरण्यप्रतीतेरनुत्पद्यादिवत्तत्कालीनश्च शब्दोऽभ्युपेयः । न च तदानीमनुत्पत्तिरस्तीति भागासिद्धिरेव । असतः कथं धर्मित्वमिति चेत्, यदि नासौ धर्मी कथमसन्नित्युच्यते । असच्छब्दस्यासत्स्वभावधर्मिवाचकत्वात् । नाभावो घटधर्मः, किन्तु भूतलादिधर्म इति चेत्, न, भूतले घटोऽस्ति, नास्ति चैति तुल्यायां प्रतीतौ सत्त्वं न भूतलधर्मो, असत्त्वञ्च तद्धर्म इत्यत्र नियामकाभावात् । सन् घट इतिवत्, असन् घट इति प्रतीतेरसत्त्वस्य तद्धर्मत्वाच्च । असतो घटस्य कथं धर्मयोगः [इ] ति चेत्, ० [स] तो [न] ? असत्त्वादेवेति चेत्, एवं तर्हि हेतुसाध्ययोः पक्षधर्मत्वात् स्ववाक्यविरोधः । तत्किमसद्दशायामस्ति घटो येन तदभावो धर्मः स्यादिति चेत्, अस्तिता सत्ता, सा नाभ्युपेयत एव । अभ्युपगमे वा कस्तस्या धर्मी, तस्मात् सदसद्दशायां साधारणः एक एव धर्मी । य एव नासीत् स एवास्तीति प्रत्यभिज्ञानादिति । अस्तु तावदेवं, तथापि रूपाद्यपि तस्यां दशायामसत्वमिव किं नाभ्युपेयते । असत्तादशायां प्रमाणेन तथानुपलम्भादिति तत् सम्बन्धसत्त्वमुपाधिरिति चेन्न, शब्दत्वसंबन्धेऽपि तस्यैवोपाधित्वात् । योऽसौ शब्दो नास्ति स शब्दो न वा ? प्रथमे शब्दत्वं सम्बन्धेन सत्त्वमुपाधिः, अन्त्ये 'शब्दो न शब्दः' स्यादिति व्याघात इति चेन्न, शब्दाशब्दयोस्तादात्म्यासंभवेन तदप्रतीतेः ।

---

१. सहि किमनुत्पन्नादन्यो ख

प्रसज्य प्रतिषेधे हि शब्दाभावोऽशब्दः, पर्युदासे च शब्दादन्यो। नचानयोस्तादात्म्यमस्ति। तथापि नास्त्यर्थेन सह विशेषणविशेष्यभावानुपपत्तिः, असत्त्वस्य विशेषणत्वात्। न च तद्विशेषणमविशेषितस्यार्थाप्रतीतेरिति चेन्न, स्वकालस्त[स्वप्रागभाव] स्यैव प्रतियोगिनोऽसत्त्वोपलक्षणत्वात्। उपलक्षणान्तरस्येव तस्यापि स्वज्ञानेन व्यावृत्तिधीजनकत्वात्। प्रागभावप्रतियोगिनोर्विरोधग्राहकमानेन बाधात्। सविशेषणे हीति न्यायाच्च।

इदानीमनुत्पन्नो घटः, असन्न घट इत्यादिव्यपदेशानां विशेषणमात्रगोचरत्वात्। घटस्याभाव इति तद्विवेचनाच्च। तदिदमविषयवृत्तित्वम्, असिद्धत्वस्य दूषणत्वेऽप्यपक्षविषयत्वात्। हेतौ च यदा **तदोत्पन्नस्य** पतनादेः **तथाभावाद्धेतुभावात् कारणोत्पत्तेः न कारणस्य प्रतिषेधः** पक्ष इति शेषः। यो यदा कदाचिदपि पतनवान् स यावत् सत्त्वं गुरुरिति व्याप्तेः। तथा यो यदा कदाचिद् गन्धवान् स यावत् सत्त्वं पार्थिव इति व्याप्तेः। एवं यो यदा कदाचित् गुणवान् स यावत् सत्त्वं द्रव्यमिति व्याप्तेरित्येतदनुक्तप्रतिपादनानुकूलेनैव सूत्रयोजना कर्तव्या। न त्वाद्यक्षणमन्तर्भाव्य साध्यत्वं, दृष्टान्तत्वं वा। साध्ये युक्ताङ्गहीनत्वं यदा तदोत्पन्नस्य गन्धादेः व्यापकत्वं, दृष्टान्ते यदा कदाचिद् गुणवत्त्वस्य व्याप्यत्वमनपेक्ष्य जातिप्रवर्तना[1]। तज्ज्ञाने उत्पन्नस्योत्पन्नज्ञानस्य ज्ञातस्येति यावत्। **तथाभावात्**-पक्षभावात्, हेतुभावात्, दृष्टान्तभावादिति। कार्यन्तु ज्ञातं कारणोपलक्षणम्, घटादिज्ञानात् कारणत्वग्रहात्, न तु कार्यविशिष्टस्यैव कारणता। त्वत्प्रवृत्तेरप्यनुत्पत्तौ व्याघातात्।५।१।१३।

[ संशयसमप्रकरणम् ]

संशयस्य विरोधिनिरूप्यत्वात् विरोधस्य चाभावगर्भत्वात्, अभावविषयानुत्पत्तिसमस्य हेतुत्वेन तद[न]न्तरं संशयसमप्रकरणाय सूत्रम्—

**सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः।५।१।१४।**

यद्यपि सामान्येत्यादिकं लक्षणानौपयिकं, संशयस्वरूपादेवार्थात्—तत्कारणसमानधर्मादिप्राप्तेः। सामान्यादिष्वप्यैन्द्रियकत्वं नित्यानित्यसाधर्म्यमित्यर्थप्राप्तिः पौनरुक्त्यं, तथापि यदि[2] न [?] शब्दे कृतकत्वम् अनित्यनिर्णयहेतुरस्तीति तन्निर्णयः, हन्त[3] नित्यानित्यसाधारणो धर्मः संशयहेतुरस्तीति स एव किं न स्यात्। कस्तयोः साधारणो धर्म इत्यपेक्षायामैन्द्रियकत्वमुदाह्रियते। कथमिदं साधारणमित्यपेक्षायां

---

१. प्रवर्तनाम् ख

२. यथा

३. तथा

**सामान्यदृष्टान्तयोरिति सूत्रकृतैवोक्तम्।** दृष्टान्त उदाहरणम्—स च दूष्यान्वयि हेतोरिति समानमित्यन्तमुदाहरणार्थं, शेषं लक्षणाय।

**केचिन्नित्यानित्यसाधर्म्यादित्यन्तमुदाहरणार्थम्।** यथा सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्या[नित्य]साधारणे तदुभयसाधर्म्यात् प्रत्यवस्थानमेवं [?] [मात्रम्] संशयसामग्र्यैकदेशबोधात्। संशयेन प्रत्यवस्थानं संशयसम इत्यर्थः। लक्ष्यनिरुक्त्या च सामान्यलक्षणसाहित्याल्लक्षणमित्यर्थं इत्याहुः।

तन्न, समानप्रत्यन्ते[1]नैवोदाहरणलाभेऽधिकवैयर्थ्यात्। लक्ष्यनिरुक्त्या च तत्कारणेन प्रत्यवस्थान[स्य]लाभात्।

यद्यपि यथाश्रुतमव्यापकम्, अनित्यत्वानुमानवदनुमानान्तरेऽपि तथा प्रत्यवस्थानात्। एवं समानधर्मादिनाऽपि, तथापि संशयेन स्वकारणमात्राक्षेपेण नित्यानित्येति सपक्षासपक्षपरम्। तेन संशयकारणान्तरादपि विषयान्तरेऽपि संशयसमो लभ्यते। तेन संशयसामग्र्यैकदेशमात्रात् संशयप्रसञ्जनं संशयसम इति लक्षणम्। अतएव धर्मिज्ञानमात्रादपि संशयप्रसञ्जने भवतीयं जातिः।

उत्थानबीजं तु यथा निर्णयकारणमस्तीति निर्णयः, तथा संशयहेतुरस्तीति तेनाऽपि भवितव्यम्। सत्यपि वा कारणे कार्यानुत्पत्तौ निर्णयोऽपि न स्यात्। न च निर्णायकाभावे संशयः, एवं संशायकाभावे निर्णयस्याप्युत्पत्तेरविशेषात्। निर्णय कारणमात्राभावश्चासंभवम् [वी], तत्कारणस्य कस्यचिन्नित्यत्वादित्यभिमानः।

**अत्र श्रीवल्लभः**—एवं विशेषविवक्षायां विपर्ययकारणाद्विपर्ययापादनं जात्यन्तरं स्यात्। सन्ति च सादृश्यज्ञानारोप्यस्मरणविशेषादर्शनानि[2]। तस्मात् संशयपदमस्य[सत्य]वेदनोपलक्षणम्। तेन निर्णयकारणोपक्षेपे मिथ्याज्ञानकारणेन प्रत्यवस्थानमप्रमितसमः।

**अथ** सूत्रे संशयपदस्य **प्रयोजनमात्रेणोपलक्षणत्वे** मानाभावात्। **सूत्रैकसमधिगम्यत्वञ्च जातेरिति** तस्यान्यत्रान्तर्भाव इति चेत्, तथा सति नित्यसाधर्म्यपदानामप्युपलक्षणत्वाभावापत्तेः। एवञ्च प्रवर्तते यथाऽग्निर्निश्चायकादनिश्चायकः,[3] तथा यत्किञ्चिदग्निभ्रमकारणादग्निभ्रम एव कुतो न जायत इत्याह। तन्न, विषयान्तरे मिथ्याज्ञानापादनेऽर्थान्तरत्वात्। स्वविषयमिथ्याज्ञानापादने मतानुज्ञा प्रवेशात्। प्रकृतविरोधभ्रमापादनस्यानुकूलत्वात्। दूष्यहेतोः साध्यविषयमिथ्याज्ञानापादनस्य

१. इत्यन्तेनैव
२. तत्कारणानि च।
३. निश्चायकान्निश्चेयः

तत्र साधकमन्तरेणाशक्यत्वात् । बाधदेशनाभासैवेयमिति चेन्न, तुल्यबलेन बाधदेशने प्रकरणसमान्तर्भावात् । तस्माद्वक्तेरसम्भवादेव नेयं जातिः, कथंचित् सम्भवेऽप्युपपत्तिसमायामन्तर्भावात्[1] तदत्र संशयकारणमेव द्वारं, हेतुर्दूष्यः । कृतिज्ञप्तिसाधारणा चेयम् । तत्र कार्यापेक्षया तत्प्रतिबन्धकत्वमारोप्यम् । अप्रतिबद्धं हि निर्णयकारणं तस्मै पर्याप्तम्, ज्ञाप्यापेक्षया तु लिङ्गज्ञाने विशेषणासिद्धिरारोप्या । संशयाभावे निर्णयहेतोस्तज्जनकत्वमित्यभिमानात् ।५।१।१४।

अत्र दुष्टत्वमूलसूत्रम् —

**साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ।५।१।१५।**

साधर्म्यात् संशयेऽभ्युपगम्यमानेऽपि साधर्म्यात् संशयकारणमात्रात् सति वैधर्म्ये निर्णायके न संशयः । विशेषादर्शनसहितानामेव तेषां तेषां तज्जनकत्वात्[2] । उभयथा निर्णायके सत्यसति चेत् संशयः, तदात्यन्तसंशयप्रवाहानिवृत्तिः । तथा च निर्णीतेऽपि संशयापत्तिः । अस्त्वेवमिति चेन्न, नित्यं सामान्यसंशयजनकानभ्युपगमात् । न च तवायमभ्युपगमः, अन्ततः कार्यकारणभावेऽपि निर्णयस्वीकारात् । अन्यथा जातिवाक्यस्य कारणाभावात् । तथा च न कार्यकारणभावः । प्रतिपादयसि चेदेवं व्यक्तो वाङ्मनसां विसवादः, समस्तलोकव्यवहारविरुद्धश्च । तदत्र युक्ताङ्गहीनत्वम् । विशेषादर्शनस्य संशयाङ्गस्य युक्तस्यानपेक्षणात् । अयुक्ताङ्गाधिक्यं वा । साधर्म्यादिविरहस्यायुक्तस्यैव निर्णयाङ्गत्वेन स्वीकारत् । संशयसमाव्यभिचारदेशनाभावे सति [इति] केचित् ।

तन्न । न हि स्वरूपतो व्यभिचारदेशनेयम्, तदनुद्भावनात् । अत एव न विकल्पः । सीमावदन्यव्यभिचारसञ्चारेणाऽपि व्यभिचारफलः संशयः, तदापादनेन व्यभिचारापादनमेव कृतमिति फलतः संशयः दूष्यते । हेतुः कारणसंशयानापादनात् निर्णायकत्वाभिमतो निर्णयं करिष्यतीति निर्णयकान्तरारोपस्तु संशयापादनाद्भिद्यते । ५।१।१५।

[प्रकरणसमप्रकरणम्]

बाधस्य विपरीतप्रमात्वाद्वैपरीत्यस्य च प्रतियोग्य[०गि०]निरूप्यत्वात्तस्य च संशयोपस्थित्या सूत्रम्—

**उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ।५।१।१६।**

साधर्म्यादित्युपलक्षणम्[3] । सिद्धिकारणमात्रोपस्थितेरावश्यकतया तत एव सामान्यलक्षणोपपत्तौ विशेषस्यानाकाङ्क्षितत्वात् । तेन वैधर्म्यादितः प्रत्यवस्थानं न

---

१. क मातृकाऽत्र त्रुटिता वर्तते ।
२. क मात्रकेह त्रुटिता वर्तते ।
३. वैधर्म्यादित्यपीति भावः ।

जात्यन्तरम् । [प्र]क्रिया साध्यं प्रक्रियमाणत्वात् । **उभयोः** साधनप्रतिसाधनयोः **साधर्म्यं** तुल्यता । नैकस्याप्यधिकबलत्त्वम् । सिद्धेरिति पञ्चमी, निर्णयात् । तेनाधिकबलत्त्वानभ्युपगमेन हेतोर्बाधाभिधानं प्रकरणसमः ।

केचिद्यत्र हेतुं विना स्थापनामात्रं प्रयु[ङ्]क्ते, तत्र स्थापनायामुत्तरस्यानभ्युपगताधिकबलत्त्वेन बाधाभिधानाज्जातिर्भवत्येव, तदव्यापकत्वम् तस्मादपुरस्कृताधिकबलेन बाधाभिधानं प्रकरणसम इत्याहुः ।

तन्न[1] अबल एव सहचारादिना बलवत्त्वमानो[ने] [?]प्यपुरस्कृताधिकबलेनापि प्रत्यवस्थानसंभवात्, तस्मात्प्रमौपयिकरूपवत्तयानभ्युपगतोत्कर्षबाधोद्भावनं प्रकरणसम इत्यन्ये ।

यदि त्वदुक्तादसिद्धिः[तर्हि]मदुक्ताद्बाध एव किं न स्यादित्यभिमानो जातिवादिनः । सा [च चतुर्विधा]चतुर्विधादिभि मानैः प्रत्यवस्थानात् ।

क्रमेणोदाहरणानि—शब्दोऽनित्यः कार्यत्वादित्युक्ते, नैवम्, प्रत्यक्षादि[न्नि]त्यस्यैव सिद्धेः । विशेषाभावात् । श्रावणत्वेन नित्यसिद्धेर्बाधात्[2] । अबाधकत्वे वा कार्यत्वमपि न साधकम् । एवमुपमानशब्दयोरप्युदाहार्यम् । एवं वैपरीत्येनाऽपि प्रत्यवस्थानम्, शब्दो नित्यः, श्रावणत्वादित्युक्ते प्रत्यक्षादिभिरनित्यत्वसाधनाद् बाधाभिमाने प्रत्यक्षादौ प्रत्यक्षादिना स्वरूपेण विरूपेण वा तदवान्तरेषु तदवान्तरभेदतो[?] । तदत्र प्रतिप्रमाणं द्वारं, हेतुर्दूष्यः । बाधितत्वमारोप्यम् । तदाभासाचेयम् । प्रतिधर्मसमावदस्यापि न केवलनिरनुयोज्यानुयोगत्वं । ननु प्रतिधर्मसमावत् साधर्म्यवैधर्म्याभ्यां प्रकरणसमापि जातिद्वयं किन्न स्यात् । सूत्रकारकृतवैचित्र्यादेव ज्ञायते, तत्र साधर्म्यवैधर्म्ये पुरस्कृत्य विभागः, अत्र तु न तथा ।५।१।१६।

दुष्टत्वमूलसूत्रम्—

**प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ।५।१।१७।**

स्थापनायाः **प्रतिपक्षात्** साधनात् स्थापनानधिकरणादपि **प्रकरणस्य** प्रक्रियमाणार्थस्य **सिद्धेः** । **प्रतिषेधस्य** बाधरूपस्यानुपपत्तिः, प्रतिपक्षादनधिकरणात् स्थापनारूपादपि साध्यसिद्धेरुपपत्तेः । असाधनेन परसाधनं, साधनेन तु परसाधनेनासाधनमिति व्याघातः । असाधारणञ्च युक्ताङ्गहीनत्वम्; बाधं प्रत्यधिकरणत्वस्य युक्तस्याङ्गस्यावधारणात् ।

---

१. क मात्रकेह त्रुटिता वर्तते ।
२. नित्यसिद्धेरबाधात् ।

[ अहेतुसमप्रकरणम् ]

प्रकरणस्य बाधदेशनाभासमात्रनिरूप्यत्वादहेतुसमस्याप्यभावविशेषणत्वेन संगत्या सूत्रम्—

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ।५।१।१८।

त्रैकाल्यासिद्धेः, हेतोः—हेतुत्वाभिमतस्य कारकस्य ज्ञापकस्य वा कालत्रय-संबन्धः त्रैकाल्यम् । तस्या[तस्य]हेतुत्वप्रयोजकस्यासिद्धेः, पर्युदासनञा व्यतिरेक[का] निश्चयात् प्रत्यवस्थानमहेतुसम इत्यर्थः । अतएव कृतिज्ञप्तिसाधारणीयं जातिः । तथा हि-साध्यज्ञानात् साध्यज्ञापनात्[?]पूर्वं दण्डादिसाधनस्वीकारे साधनत्वानुपपत्तिः, साध्योपहितत्वात् साधनत्वस्य । साध्यस्योपधायकस्याभावेऽनुपपत्तेः । दण्डादिपूर्वं घटादिसाध्यस्वीकारे साध्यत्वानुपपत्तिः; साधनघटितमूर्च्छितत्वात् साध्यस्य । सहभावे च तयोः सव्येतरविषाणयोरिव साध्यसाधना[नत्वा]नुपपत्तेः, साध्यसाधनयोर्मिथो विशेषणत्वमित्यभिमानात् । तथा ज्ञापकस्य धूमादेः साध्यज्ञापनात् पूर्वं साध्यज्ञापक-ज्ञाने साध्यघटित मूर्जितः साधनत्वमजानता दुर्ज्ञानत्वं[1], साध्यस्यैव पूर्वं ज्ञाने तत्प्रति-योगिसाधनमन्तर्भाव्य दुर्बोधत्वं, सहभावे च ज्ञाप्यज्ञापकत्वानुपपत्तिरित्युक्तसम्भवस्य तुल्यत्वात् ।

यद्यपि हेतोः पूर्वापरसहभावखण्डनेन प्रत्यवस्थानमहेतुसमताभि[समइति] लक्षणमव्यापकं, हेतोः सहत्वासहत्वखण्डनेनापि प्रत्यवस्थानसम्भवात् । तथापि त्रैकाल्यग्रहणन्तूपलक्षणार्थम् । हेतुत्वाभिमतस्य समयसम्बन्धमात्रेण हेतुत्वविरोधा-पादनमहेतुसम इति लक्षणम्; समयसम्बन्धमात्रस्याहेतुत्वनियमाभिधाने तद्बलाद-हेतुत्वापादनमिति वा । ननु समुदितत्रैकाल्यसम्बन्धानुपपत्त्यैवेयं जातिः सूत्रे त्रैकाल्यासिद्धेरिति मन्तव्यम् । समयसम्बन्धानुपपत्तेरेव जातित्वोपपत्तौ समुदायान्वये गौरवात् । अन्यथा तस्य जात्यन्तरत्वापत्तेः । त्रैकाल्यश्रुतेरुदाहरणविशेषपरतयैवोप-पत्तेः; समुदायासिद्धेरपि समयसम्बन्धमात्रानुपपत्तिजीवनाच्च । अनुत्पत्तिसमे तु कार्य-प्राक्कालसम्बन्धानुपपत्तिरुत्थानबीजम्; इह तु कालसम्बन्धविरोध इति न तत् सङ्करः ।

ननु कार्यज्ञाप्यभेदभिन्नसाध्यप्राप्त्यप्राप्तिभ्यां विकल्पने प्रत्यवस्थानात् कार्य-कारणभावप्रतिक्षेपरूपप्राप्त्यप्राप्तिसमातः कथमस्यभेदः ? तदवान्तरभेदवशात् । तत्र साधनं साध्येन सन्निकृष्टमसन्निकृष्टञ्चेति स्वरूपतास्तुभ्यस्ता[2] [?] इह तु साधनत्वनिरूपकेण समयेन कारणतौपयिकसाध्यसाधनसम्बन्धानुपपत्तिरिति कालतः[3] ।

१. दुर्ग्रहत्वमिति भावः ।

२. स्वरूपतः ।

३. कारणतः ।

कालसन्निकर्षासन्निकर्षखण्डनद्वारा तयोरवतार इति चेन्न। तत्र "साध्यं प्राप्ये" ['प्राप्य साध्यमि' ५-१-७] त्यादिसूत्रे श्रुतार्थत्यागस्यानैकत्वात्[1]; तत्र हेतु चासङ्गीकृत्यैवा [त्वमङ्गीकृत्यैवा ?]विशेषातिप्रसङ्गयोरासञ्जनम्, इह तु कारणताखण्डनमिति प्रत्यवस्थानप्रकारभेदाच्च। ते अर्थद्वारिके, इयं तु शब्दद्वारिका। तथा हि—प्राप्तोऽपि न साधनं, दण्ड इव चक्रे। अप्राप्तोऽपि न तथा, विन्ध्य इव हि भवतीत्यर्थस्वरूपप्राप्त्यप्राप्ती तत्र द्वारम्, इह तु शब्दोऽभिहितः। साध्यसाधनभावो न सम्भवति सप्रतियोगिनोः कैवल्येनात्मना [ऽ]भावात्। साध्यसाधनोपहितत्वात् साध्यसाधनयोरिति साध्य-साधनशब्दबलेन प्रत्यवस्थानम्। तयोरपि शब्दाभिहितसाध्यसाधनद्वारा प्रवृत्तिरस्ति, रूपान्तरेण चास्या अपि शब्दद्वारकत्वं नास्तीति न। विशेषणयोरिति चेन्न। तत्र कारणतामङ्गीकृत्याविशेषातिप्रसङ्गयोरापादनमिति, [अत्र] तु कारणशब्दार्थं एव दूष्यत इत्युक्तत्वात्। तद्धि[तत्र]विकल्पोपक्रमे[2], इयं त्रिविकल्पोपक्रमा, नात्र नियमः; सहभावासहभावविकल्पाभ्यामप्यत्र प्रत्यवस्थानसम्भवादिति चेन्न। उदाहरण-विशेषमभिप्रेत्य तदभिधानात्।

वस्तुतः, तत्र प्राप्त्यप्राप्त्योः कारणतावच्छेदकत्वेनासहकारित्वेऽपि तयोः सहकारित्वमारोप्य दूषणम्; इह तु कारणतास्वरूपमेव दूष्यते। अपि च ते विशेषणा-सिद्ध्याभासे प्राप्त्यप्राप्त्योः हेतुविशेषणयो दूषणात्। इयन्तूक्तरूपप्रतिकूलतर्क-देशनाभासा। तत्रापि प्राप्त्यप्राप्त्योरविशेष्य[षाति]प्रसङ्गापादनाभ्यां प्रतिकूल-तर्कदेशनाभासत्वमस्तीति चेन्न। 'अविशेषादतिप्रसङ्गादिति' पञ्चस्यास्त्वविशेषादेः दूषणस्याप्रयोजकत्वमुच्यते तत्र। इह तु साध्यसाधनयोरन्योन्यप्रतियोगितयाऽन्योन्य-योरात्मलाभसंभवेनान्योन्याश्रये पर्यवसानमिति ।५।१।१८।

प्रत्युत्तरसूत्रम्—

**न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ।५।१।१९।**

ज्ञप्तिपक्षे हेतोर्ज्ञापकात् त्रैकालिक[स्य] साध्यस्य ज्ञाप्यस्य, सिद्धेः ज्ञाप्यदर्शनस्य सार्वलौकिकत्वान्न त्रैकाल्यासिद्धिरूप प्रतिषेधः। तदत्र युक्ताङ्गहीनत्वम्, तर्कप्रवृत्त्य-ङ्गस्य व्याप्तेरनपेक्षणात्। कृतिपक्षे न त्रैकाल्यासिद्धिः। हेतुतः पूर्वकालयुक्तात् साध्यस्य कार्यस्य, उत्तरकालयुक्तस्य, सिद्धेरुत्पत्तेः, सार्वलौकिकत्वात्। अन्यथा स एव व्याघात इत्यर्थः।

ननु प्रागसति साध्ये साध्यविशिष्टपदार्थवाचि साधनपदाप्रयोग इति चेन्न, साध्यस्य हि साधनं प्रति विशेषणत्वं क्वोपयुज्यते? साधनत्वव्यवहारे वा, साध्यानुकूल-व्यापारजनने वा। आद्यश्चेत् नासौ साध्यरूप[०ध्यस्वरूपेण]साध्यः, किन्तु तद्धि

---

१. श्रुतार्थत्यागस्यानौचित्यात् इति पाठः सम्यक् प्रतिभाति।

२. ते द्विविकल्पोपक्रमे

साध्यः। साध्यस्य तत्र विषयतायामसतोऽपि विषयता न दोषाय। विषयविषयिणोः विशेषणविशेष्यभावव्यवस्थाया अनन्यगत्या तथात्वाङ्गीकारात्। द्वितीयस्त्वन्यथाऽभ्युपपद्यमानो न साध्यस्य विशेषणतामावश्यकीं करोति।

ननु घटकारणं दण्ड इत्यत्र घटो विशेषणं, कथमसन् [?] स्वतो विशेषणत्वाभावात्। उपलक्षणञ्चैतत् किमुपलक्ष्यम्? कारणमात्रञ्चेत् पटकारणमपि घटकारणं स्यात्। कारणविशेषश्चेत्, न, । तस्य व्यक्तिरूपस्य तथैवातिप्रसञ्जनत्वादन्यस्य च घटान्यस्या[घटेऽन्वया] योगात्। अतो यस्मात् कस्माद्धि घटोत्पादनेऽतिप्रसङ्गो घटकारणाच्च घटादय इति दुर्घट इति चेत्, न। घटेन सह पूर्वापरसहभावलक्षणः सम्बन्धो निरूपाधि र्यस्य [स] घटकारणमिति स्वभावशब्दैरेव नियामकत्वात्। सदसतोः सम्बन्ध एव कथं घटते, सम्बन्धसम्बन्धिनोः समकालत्वादिति चेत्। नायं नियमः, ज्ञानज्ञेयादावन्यथास्वीकारात्। तथा प्रमाण[1]विषयः[2] तथाङ्गीकार इति स्यात्; अन्यथा व्याघातस्य वक्ष्यमाणत्वात्। यदिदमङ्गहीनत्वं संबन्धस्य सहभावेन व्याप्त्यसिद्धेः, ।५।१।१९।

एवमनभ्युपगमे तवापि व्याघात इत्याह—

**प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ।५।१।२०।**

चकारः प्रत्युत्तरसमुच्चयार्थः। एवं कार्यकारणभावे प्रतिषेध एवासम्भवीकृतस्तेनान्यप्रतिषेध इत्यर्थः ।५।१।२०।

### [ अर्थापत्तिसमप्रकरणम् ]

अर्थापत्तेरनुपपत्तिविषयत्वेनाभावनिरूप्यत्वात्तन्निवृत्तिनिरूप्याहेतुसमानान्तरमर्थापत्तिसमप्रकरणमाह—

**अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ।५।१।२१।**

**अर्थापत्ति[त]**स्तदाभासात्, स्वव्याघातकत्वात्, **प्रतिपक्षसिद्धेः** प्रत्यनीकसिद्धेर्यः प्रतिषेधः सोऽर्थापत्तिसम इत्यर्थः।

यद्यप्येतत् स्वव्याघातकत्वं यत्र केवलो निरनुयोज्यानुयोगः, तत्रातिव्यापकं, नाप्युक्तस्याक्षेपसामर्थ्यं प्रकल्प्य तत्तदनुरूपदूषणोद्भावनं तत्, कृतकत्वं चेदव्यभिचारि, तर्हि अर्थादापन्नमिदं व्यभिचारीत्युदाहरिष्यमाणाव्याप्तेः। कृतकत्वस्यानुक्तस्यैवाक्षेपत्वात्। अत एवोक्तस्यानुक्तत्वपुरस्कारेण प्रत्यवस्थानमित्यपास्तम्। तथाप्यर्थापत्त्याभासेन स्वव्याघतकमुत्तरमर्थापत्तिसम इति लक्षणम्। प्रतिधर्मप्रकरणसमायाञ्च साङ्कर्यं न दोषाय, क्वाचित्कत्वात्। उत्थानवीजं विशेषणविशेष्यभावोऽन्ययोग-

---

१. प्रमाणे ख।
२. विषयतान्तु ख।

व्यवच्छेदेनैव भवतीत्यभिमानः। नचायं वस्तुप्रकारः। तथाहि–शब्दोऽनित्य इत्युक्ते, अर्थादापद्यते नान्योऽनित्यः। तथा च साध्यविकलो दृष्टान्त इति विरुद्धत्वम्। नन्वयादिति [नान्योऽनित्य इति] किं शब्दमहिम्नैव वाऽविनाभावेन वा ? नाद्यः, तत्र शब्दस्याव्यापारात्; अन्यथा सर्ववाक्यानां विधिनिषेधरूपार्थद्वयपरत्वे वाक्याभेदापत्तिः[1]। नान्त्यः, शब्देऽनित्यत्वस्यानित्य[शब्द]त्वानित्यत्वाविना[भावा]भावादिति चेन्न। 'विशेषविधेः शेषनिषेधविषयत्वम्' इत्युक्ताभिमानादुत्पत्तेः। अनित्य साधर्म्यात् कृतकत्वादनित्यता[इ]त्युक्तेऽर्थादापन्नं प्रत्यक्षान्नित्य[त्वम्]इति बाधः। शब्दोऽनित्यो जातिमत्त्वे सति बाह्यकरणप्रत्यक्षत्वादित्युक्तेऽर्थादापद्यते नैवं भूतो,[2] नानित्य इति। न चायं नियमः, पार्थिवपरमाणुरूपादीनामनीश्वरविभुविशेषगुणानामप्यनित्यत्वात्। तथा च व्यभिचारः। शब्द एवम्भूत इत्युक्ते अर्थादापद्यते नानैवं इति। तच्च सिद्धं[अनित्यत्वा] दि शब्दानामनैवं[नामेवं]भावात्। एवमस्मिन्नेव हेतावुक्ते कृतकत्वमनित्यत्वसाधकं न वा। न चेदिदमपि कथं साधकं, अविशेषात्। साधकञ्चेदर्थादापद्यते नान्यत् साधकमिति सर्वदोषोपसंहारः, सर्वदूषणशङ्काधायकत्वात्।

यद्वा कृतकत्वं पाञ्चरूप्यसंपन्नं न वा। न चेदमर्थापत्त्या प्रकृतहेतोः पाञ्चरूप्याभावसिद्धेः। पक्षासत्त्वेऽसिद्धः, सपक्षासत्त्वे विरोधः, विपक्षाव्यतिरेके व्यभिचारः, धर्मिणि साध्याभावप्रमायां बाधः। दूषणस्याप्यनुमानच्छायत्वमापद्य प्रवृत्तेः। तदस्यानुक्ताक्षेपोद्धारम्। हेतुर्दूष्यः, सिद्धत्वाद्यारोप्यम्। तदाभासा चेयम्।

ननुच्छलमेवेदं, वाद्यभिप्रायवर्णनस्यात्रापि भावात्। न च शब्दार्थविकल्पाभावान्नैवं, तदर्थविकल्पाभावेऽपि तात्पर्यविकल्पाच्छलसम्भवात्। न न० [तन्न, विकल्पाभावे ना] भिप्रायमात्रं तात्पर्यम्। येन तत्सञ्चारात् तात्पर्यसञ्चारोऽपि स्यात्। न चात्राभिप्रायवर्णनमप्याकरे तथोक्तेरभ्युपगमवादत्वात्।५।१।२१।

अत्र प्रत्युत्तरसूत्रम्—

**अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः।५।१।२२।**

किमनुक्तमात्रमर्थादापद्यते, उक्तोपपादकमनुक्तं वा ? आद्येऽनुक्तस्यानुक्तमात्रस्यार्थापत्ति र्यदि, तदा पक्षहानेस्तत्पक्षहानेरुपपत्तिः। ०[अ]तोऽनुक्तत्वात्। अनुक्तायां यतः तथा च स्वव्याघातः, स्वोक्तिव्यापनात्। नान्त्यः, अनैकान्तिकत्वोक्तरुपायाः अर्थापत्तेः यतः प्रकृतोक्तस्यानुक्तेनाव्यापनात्; अव्यापकस्य चानुपपादकत्वात्।

---

१. 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति' इति न्यायात्।

२. 'जातिमत्त्वविशिष्टबाह्यकरणप्रत्यक्षत्वाभाववान्' स नित्य इति।

चकारेणानुक्तबाधादयः समुच्चीयन्ते। वादजल्पयोश्च वादिसाधनमिव प्रतिवादिसाधनमपीयमर्थापत्तिरभिसम्प्लव इति नैकान्तिकव्यवस्थितेयमिति स्वव्याघातः।

यद्यपि च स सर्वजातिषु विशिष्टः, तथापि सूत्रकारसूचितानैकान्तिकत्वप्रकारव्याख्यानद्वारा यत्र क्वचन व्यापनीयतयैवेह व्याप्यत इत्यर्थः ।५।१।२२।

[अविशेषसमप्रकरणम्]

अर्थापत्तेरनुपपत्तिनिरूप्यत्वेनाभावनिरूप्यत्वमविशेषस्याप्यभावनिरूप्यत्वमित्येकनिरूप्यत्वसङ्गत्या सूत्रम्—

**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ।५।१।२३।**

**एकः** साध्यदृष्टान्तयोरभिन्नः साधनधर्मः, **तस्योपपत्तेः** सम्बन्धात्। **अविशेषः** साध्यधर्मवत्तालक्षणः, तस्मिन्निति जातिवाद्यभिप्रायवर्णनं जात्युत्थानबीजप्रदर्शनाय। [तस्य]लक्षणपरत्वे व्यर्थत्वाद्व्यतिरेकिणा स्थापनायामव्याप्तेश्च। प्रत्यवस्थानप्रकारमाह—**सर्वाविशेषप्रसङ्गात्**।

सर्वेत्यसङ्कोचादापादकवत् समुदायपरम्। **अविशेषः** तादात्म्यमेकधर्मवत्त्वम्; एकजातीयधर्मवत्त्वं वा। तत्किं साधनधर्मोपपत्तेरेव, नेत्याह—**सद्भावोपपत्तेः**। सतो भावः **सद्भावः** तद्धर्ममात्रम्। **तदुपपत्तेः** तत्संबन्धात्, स एवोपपत्तिः युक्तिः ततो वा। तेन प्रमेयत्वद्रव्यत्वादिनाऽपि प्रत्यवस्थानं लभ्यते। सर्वत्र तादृशधर्माक्रान्ते यथोक्ताविशेषप्रसञ्जनात् प्रतिषेधोऽविशेषसम इत्यर्थः। अत एवोत्कर्षसमातो[ऽस्य] भेदः, तत्र साधनधर्मादेव विशेषविरोधेन प्रत्यवस्थानात्। अत्र तु धर्ममात्रेण। अत एवोत्कर्षसमादीनां किञ्चित्साधर्म्यादेकत्वं दूषयितुमविशेषसमा चेयं जातिरित्याह **वार्त्तिककारः**।

**केचिदेकधर्मोपपत्ते**रविशेष इत्यादि लक्षणपरमेव। तथाहि—अविशेष इति निमित्तसप्तमी। तेन साध्यदृष्टान्तविशेषनिमित्तकधर्मान्तरनिबन्धनमविशेषप्रसञ्जनमविशेषसमः। न च व्यतिरेकिस्थापनायामव्याप्तिः; जातिवाद्याशयोद्घाटनपरत्वेऽपि तुल्यत्वात्। उपलक्षणन्तु समानमित्याहुः।

तेन धर्ममात्रस्यैवानिष्टापादनसामर्थ्यमित्यभिधानात्। यत्किञ्चिद्धर्मबलेनाविशेषरूपानिष्टापादनमविशेषसम इतिलक्षणम्। अतएव नोत्कर्षसमप्रतिधर्मसमसङ्करः। तत्रानुवृत्तव्यावृत्तधर्मपुरस्कारेण प्रत्यवस्थानात्।

**अन्ये तु** सतो भावः सद्भावः तद्धर्ममात्रमित्यसङ्कोचे जात्यन्तरसङ्करः स्या-

दित्यविशेषे विशेषापेक्षायां यावदुपात्तविशेषान्यपरत्वं **'गोवृषन्यायात्'** इत्यस्या आकृतिगणत्वमित्याहुः । तन्न । अत्राविशेषेणैवापादनाज्जात्यन्तरे चान्यथेति विशेषात् ।

**अपरे** तु साधनत्वसामान्यापेक्षया दृष्टान्तसाम्यस्य साध्यवत्त्वलक्षणस्य सिद्धये किञ्चित्साम्यबलात् सामान्यतोऽनिष्टरूपेण बाधसत्प्रतिपक्षत्वाभिप्रायेणाविशिष्टत्वापादनमविशेषसम इत्याहुः । तन्न । अविशेषणस्य सर्वदूषणाभासतायाः वक्ष्यमाणत्वात् ।

एवञ्च प्रवर्तते—

यदि कृतकत्वलक्षणैकधर्मोपपत्तेः शब्दघटयोरनित्यत्वलक्षणोऽविशेषोऽन्तः सत्त्वाद्येकधर्मोपपत्तेः त्रैलोक्यस्यैवाविशेषः, अन्यथा त्वदपेक्षितोऽप्यविशेषो न स्यात् । तत्र तादात्म्येनाविशेषे पक्षाद्यविभागः । तज्जातीयत्वेनाविशेषे जातिसङ्करः । त्रैलोक्यस्यैकजात्ये सर्वजातीनां सर्वत्र सत्त्वात्, अवान्तरजातिविलोपो वा । सर्वस्यैकजात्ये बुद्धित्वज्ञानत्वादिवदन्युनानतिरिक्तव्यक्तिवृत्तिजात्यन्तराङ्गीकारे त्रैलोक्य०[स्यैका] त्म्यकमेवसामान्यमित्यवान्तरजात्यभावात् । एकजातीयधर्मकत्वेनाऽविशेषे गुणकर्मणोरप्यनित्यधर्मसंसर्गः स्यात् । पूर्वत्र धर्मस्यैवैक्यम्, अत्र तु धर्मधर्मस्यानित्यत्वस्य । एवं धर्मत्वाद्व्यभिचारित्वविरुद्धत्वाद्यापत्तौ[1] सर्वदूषणाभासत्वम् । एवं द्रव्यत्वलक्षणैकधर्मोपपत्तेर्न्नवा नामविशेषः क्रियावत्त्वं स्यात् । ऐन्द्रियकत्वलक्षणैकधर्मोपपत्तेर्वा शब्दघटयोर्मूर्तत्वमविशेषः स्यात् । घटजातीयत्वं तद्घटतादात्म्यमेवेति । अत्र प्रतिधर्मेण तथा प्रत्यवस्थानोदाहरणे कथं प्रतिधर्मसमातो भेद इति चेत्, सत्प्रतिपक्षापादनाभिप्रायवैधुर्यात् । प्रकरणसमया च, बाधाभिधानविरहात् । अन्यव्यभिचारजधर्मेणाप्रत्यवस्थानाच्च विकल्पसमया तदप्रतिबन्धाभिमानमुक्तरूपो बीजम् । साधर्म्यान्तरं द्वारम् । असाधकत्वमारोप्यम् । सर्वदूषणोभयी चेयम् ।

**केचिदिदं** सूत्रमन्यथा व्याचक्षते । एकस्मात्साधनाभिमताद्धर्मात् पक्षदृष्टान्तयोः साध्यधर्मवत्तालक्षणाविशेषसर्वप्रकारेणाविशेषः प्रसज्यते । सद्भावोपपत्तेः, सद्भावस्य सर्वप्रकाराविशेषस्योपपत्तेः । न हि तत्साधनमेकस्यैव साध्यधर्मस्य साधने समर्थं, न तु तत्सहचरितस्यान्यधर्मस्य । न च सर्वप्रकाराविशेषस्त्रिविधः, व्यक्तितो, जातितः, साध्यधर्मतश्च । यथा घटादौ कृतकत्वं तद्घटरूपत्वादिसर्वाकारसहचरितमुपलब्धं, घटत्वादिसामान्यमपि गमयेत्; अविशेषात् । एवं महानसेऽपि धूमः तदग्निसहचरित उपलब्धः सर्वतोऽनुगमयेयंस्तामवगमयेत्[?]न चेदेवं, न गमयेदेवेति । मैवम्, उत्कर्षसमान्तर्भावादित्यन्ये । पक्षदृष्टान्तभेदस्थितावुत्कर्षसमप्रवृत्तिः, अत्र तु न तथेति चेन्न, जातिसाध्यधर्माविशेषोपादानेऽपि धर्मिविशेषस्थितेरविरोधात् । तादात्म्यापादनभेदाभावात्तदसंभव इति चेन्न । अतादात्म्ये सति तादात्म्यस्यैवोत्कर्षणीयत्वात् । अरजते रजततादात्म्यारोपवत् । धर्मविकल्पस्य चात्र तदतद्रूपलक्षणत्वादिति । तन्न । विशेषविरोधापादनाभिप्रायवैधुर्यात् । तस्मात् प्रागुपदर्शितान्नत्योदाहरणानामव्या-

१. द्युत्पत्तौ ख ।

पकमिदं व्याख्यानमित्येव बाधकं साधीयः। जात्यन्तरलक्षणेन तेषामसंग्रहात्। भाष्यादीनां प्रथमोपदर्शितव्याख्यानानुसारित्वाच्च।५।१।२३।

अत्र दोषमूलत्वप्रतिपादनार्थं सूत्रम्—

[1]क्वचित्तद्धर्मा[क्वचित्तद्धर्मा]नुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः ॥५।१।२४॥

क्वचिदापादकत्वाभिमते सत्त्वादौ जातिवाद्यभिमते साधने तद्धर्मस्यापाद्यव्याप्यत्वस्यानुपपत्तेरसिद्धेः। क्वचिच्च कृतकत्वादौ तद्धर्मोपपत्तेरनित्यव्याप्यत्वोपपत्तेः।

यद्वा क्वचित्त्रैलोक्याविशेषादौ तद्धर्मानुपपत्तेः सत्त्वादिसाधनव्यापकत्वानुपपत्तेः, क्वचिदनित्यत्वादौ कृतकत्वव्यापकत्वोपपत्तेः प्रतिषेधस्य यथोक्तस्याभावः।

यद्वा क्वचित्साहचर्यमात्रेण तद्धर्मापादनेऽनुपपत्तेः, प्रमाणविरोधात्। क्वचित्तद्धर्मस्य व्याप्तिबलेन साधकत्वोपपत्तेः प्रतिषेधो नोपपद्यते इत्यर्थः। तदिदं युक्ताङ्गहीनत्वम्। प्रतिबद्धं युक्तमङ्गमनपेक्ष्य प्रकृतजातिप्रवृत्तेः।

तदयं प्रत्युत्तरक्रमः। कोऽभिसन्धिर्जातिवादिनः। यथा सत्त्वं त्रैलोक्यस्य विशेषे न साधकं तथा कृतकत्वमप्यनित्यत्वे।

यद्वा यथा कृतकत्वमनित्यत्वे साधकं तथा सत्त्वमपि त्रैलोक्याविशेष इति दृष्टान्तोपन्यासेनैवापेक्षितसिद्धिः। यथा कृतकत्वमनित्यत्वासाधकं समानधर्मत्वात्, सत्त्वं वा त्रैलोक्याविशेषसाधकं, समानधर्मत्वात्, कृतकत्ववत्।

अथवा त्रैलोक्यमविशिष्टं समानधर्मवत्त्वात्, शब्दघटवदिति स्वतन्त्रं साधनम्। अथवा यदि कृतकत्वलक्षणो विशेषोऽनित्यत्वेन रूपेणाविशेषं साधयति तदा सत्त्वमपि त्रैलोक्याविशेषं साधयेदिति प्रसङ्गः। नाद्यः, केवलदृष्टान्तस्यासाधकत्वात्। साधकत्वे वा व्यवस्थानुपपत्तेः। यथा वा स० न दूषणं तथा त्वद्दृष्टान्तोऽपीति प्रत्यवस्थानस्य सुलभत्वात्। प्रतिदृष्टान्तसमान्तर्भावापत्तेः। अतएव न द्वितीयः, व्याघाताच्च। परोक्षहेतोरसाधकत्वसाधनायोद्यतस्य तत्साधकत्वं दृष्टान्तेनोपादानस्य वाङ्मनसो विसंवादात्। न तृतीयचतुर्थौ प्रतिबन्धासिद्धेः। तद्रहितस्य साधकत्वे यतः कुतश्चिद्धर्माज्जातिवाक्यस्यापि प्रतिक्षेपसिद्धेरवर्जनीयत्वात्। पञ्चमस्तु यदि त्रैलोक्यं, स तस्मादविशिष्टं स्यादिति वा।

---

१. क्वचित्तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभाव इति न्यायसूचीनिबन्धधृतः बहुसम्मतः पाठः।

यदि कार्यत्वादनित्यत्वरूपाविशेषः स्यात्; सत्त्वादपि स्यादिति वा। नाद्यः, प्रमाणेनावधूतसाध्यव्यतिरेकसाहचर्ये व्याप्तेरभावात्। तां विना साधकत्वोपगमे व्याघातात्। यदि सत् स्यादविशिष्टं स्यात्; न चेदविशिष्टं तस्मान्न सदिति विपर्ययस्य सर्वाग्राहकमानेन बाध इति विपर्ययापर्यवसानाच्च। न द्वितीयः, कृतकत्वस्यानित्यत्वलक्षणाविशेषसाधकत्वस्य सत्त्वस्याविशेषसाधकत्वे नाव्याप्तेः। एतेन यद्युपलभ्यमानो कर्ता निरूपाधिसाहचर्योपलम्भबलेन कार्यत्वात् सिद्ध्यति, हन्त, तादृशात् पशुत्वाद्विषाणित्वमपि शशस्य किं न स्यादिति अपास्तम्। न हि कार्यत्वस्य कर्तृसाधकत्वं, पशुत्वस्य विषाणित्वसाधकत्वेन व्याप्तम्।५।१।२४।

[ उपपत्तिसमप्रकरणम् ]

अविशेषसमोपपत्तिसमयोरुपपत्तिगर्भत्वात्तादानन्तर्यसंगत्या सूत्रम्—

**उभयकारणोपपत्तेरुपपत्तिसमः ।५।१।२५।**

उभयोः—पक्षप्रतिपक्षयोः, कारणं-प्रमाणं, तस्योपपत्तेः-उपपादनात्, प्रत्यवस्थानमित्यनुषज्यते। तथा च स्वपक्षसाधनसिद्धिप्राधान्येन परसाधनदूषणमुपपत्तिसम इत्यर्थः। पक्षोपादानं विषयप्रदर्शनाय। तेन स्थापनायां कृतायामिति लभ्यते। साम्यप्रदर्शनेनो[०र्शनं चोत्था०]त्थानबीजप्रदर्शनाय च। उभयग्रहणं प्रत्यवस्थानप्रकारसूचनायेति केचित्। तथा हि यथा त्वत्पक्षे प्रमाणं तथा मत्पक्षेऽपि प्रमाणं भविष्यति। त्वत्पक्षे किञ्चिद्दूषणं स्यादित्येकोपि बाधो भवत्येव। तन्न। यत्र स्वपक्ष एव सामान्यत.[1] कारणमुपपादयति तदव्याप्तेः, न, स्वप्रतिपक्षप्रमाणोपदर्शनाद् यदि बाधः प्रतिरोधो वा, तदा सदुत्तरमेव।

न च स्वव्याघातकत्वेन विशेष्यं, अधिकबलेन साधनेन बाधाविधाने प्रकरणसमत्वात्, प्रतिधर्ममात्रेण प्रतिरोधोद्भावने च प्रतिधर्मसमत्वात् [च]।

अथवाऽत्र विपरीतसाधननिवृत्तिः, शक्यप्रतिपत्तिः[2] सर्वादृष्ते[ष्टे]शब्दे हीति स्वादृष्ते [ष्टे] र्व्यभिचारात् योग्यादृष्टेरसिद्धेः, अतो सत्प्रतिपक्षो न किञ्चित् मानम् स्यात्तत्पक्षेऽपि किञ्चिद्दूषणमिति सन्दिग्धबाधाभिमानमुपपत्तिसम[3] इति चेन्न। व्याप्यत्वासिद्ध्यादि विशेषदूषणो पक्षे मानेनाप्युपपत्तिसमप्रवृत्तेः। स्वपक्षे प्रमाणसम्भवेन या पक्षस्योभयात्मकत्वसाधनमुपपत्तिसम इति चेन्न। अप्रसिद्धविशेषणत्वात्। सामान्यतः स्वपक्षोपपादकसमबाधप्रतिरोधान्यताभिधानं स इति चेन्न। अव्यापकत्वात्। व्याप्यत्वासिद्ध्यापादनद्वाराप्यतज्जातिप्रवृत्तेरुक्तत्वात्।

१. समोऽन्यतः[?]क।
२. इतः मानमित्यन्तं यावत् पाठस्यार्थसङ्गति र्न भवति।
३. बाधाभिधानम् ख.

अत्र प्रतिपक्षमानोपपादनेन बाधाभिधानं, प्रकरणसमे तु प्रतिपक्षोपपादनेनेति चेन्न। विपरीतार्थसिद्धिबोधाभावात्। अन्यथाऽर्थान्तरप्रसङ्गात्। अत्र साधनसिद्धिद्वारा बाध इति चेन्न। अस्यास्तद्विशेषणत्वापत्तेः। तस्मादत्र बाधोपसर्जनीभूता प्रतिपक्षसाध्यसिद्धिर्मुख्यत उद्देश्या। प्रकरणसमादौ तु प्रतिपक्षसाध्यसिद्धिः साक्षादुद्देश्या। नचैवमत्र न बाधदेशना, उपसर्जनतया साध्याभावस्य साधनादिति भेदः।

यद्वा इहोभयत्र प्रमाणमङ्गीकृत्य बाधाभिधानं प्रमाणबाधितसाध्यविपर्ययदुःखोत्थमपि सम्भवात्, अन्यत्र तु नैवम्। यद्वाऽन्यत्रविशिष्य साधनमुक्त्वा तेन बाधोक्तिः। अत्र तु किञ्चित्प्रमाणं स्यान्मदुक्तत्वादित्यादेः सामान्यतः तदुल्लेख्यात्। तेन मेयत्वादिति यत्किञ्चिद्धर्मबलेन स्वपक्षसाधनोपपादनात् प्रत्यवस्थानमुपपत्तिसम इति लक्षणम्। परपक्षसाधारणधर्मबलेनस्वपक्षसाधनोपपादनाद्दूषणमिति वा। यदियमेवं प्रवर्तते—शब्दोऽनित्यः कार्यत्वादित्युक्ते, यद्यनित्यपक्षे प्रमाणमस्तीत्यनित्यो, ननु नित्यपक्षेऽपि किञ्चित्प्रमाणं भविष्यति, मदुक्तत्वात् त्वत्पक्षवत्। त्वत्पक्षमत्पक्षयोरन्यतरत्वात्। प्रकृतसंशयविषयत्वात्; विप्रति-त्तिविषयत्वादित्यादि बृहस्पतिनतानुशिष्टमन्यदपि हेतुजातं प्रतिसन्धेयम्। तथा च पक्षस्य बाधः प्रतिरोधो वा। तदस्याः सामान्यतः प्रमाणसाधनद्वारम्। बाधप्रतिरोधावारोप्यौ तदाभासाचेयम्।

नवीनास्तु यथोक्तलक्षणस्य, विशिष्टव्यतिरेकाणां, अन्यजातिलक्षणासंगृहीतानामसंग्राहकत्वात् त्रयोविंशतिजात्यन्यजातित्वमुपपत्तिसमत्वमित्यत्रैव तेषामन्तर्भावः। तद्यथा—त्वत्पक्षसपक्षतदितरपक्षवृत्तिनः साध्यवृत्तिधर्मवान् साध्याभावातिरिक्ते तद्धर्मातिरिक्तधर्मवान्, अपक्षत्वसाध्याभाव[वद्]वृत्तिधर्मवान् साध्याभावातिरिक्ते तद्धर्मातिरिक्तधर्मवान्यत्वान्यतरधर्मवत्त्वादित्यादिना बाधः। अयं हेतुः साध्याभावसहचारी, पक्षवृत्तित्वादित्यादिनाव्यभिचारः। विवादपदं हेतुसामानाधिकरणपक्षधर्मेतरधर्मवत् धर्मवत्त्वादित्यादिनाऽसिद्धिः। शब्द इतरभेदसहवृत्त्याकाशधर्मेतरधर्मवद्वृत्तिधर्मत्वादिति विरोधः।

एवं बाधप्रतिरोधादनैकान्तिकत्वादिसकलदोषाभासदेशने यथाशङ्का पिशाची चान्तर्भवति। तथाहि-उपाधिर्निश्चितः, शङ्कितश्चेति तच्छङ्कया व्याप्तेरेवानिश्चयः। एवञ्च सर्वथाऽनुपलभ्यमानोपाधिशङ्काग्रस्तत्वादित्यादेः संग्रहः। सूत्रार्थश्चोभयोः पक्षप्रतिपक्षयोः कारणं प्रमाणत्वाभिमतं तदेवोपपत्तिः, तद्बलात् प्रत्यवस्थानमुपपत्तिसम इत्याहुः।५।१।२५।

दोषचिन्तासूत्रम्—

**उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः।५।१।२६।**

वाद्यभिमतसाध्योपपत्तौ यत्कारणं प्रमाणं तस्याभ्यनुज्ञा[ना]दयं प्रतिषेधो न युज्यते, विरोधात्। अनुज्ञाप्रतिषेधयोरेकत्रासम्भवात्। तथा च व्याघातः, अननु-

ज्ञानेनास्वीयपक्षसाधकमपि नानुजानीयात्; अविशेषात्। प्रतिक्षिकस्तु दुच्छत्वम्[?] युक्ताङ्गहीनत्वम्, हीनाधिकमनयोर्बाध्यबाधकभावे नियमात्। न च तुल्यबलत्वे प्रतिरोधकभावः। तुल्यबलं हि वास्तवम्, आभिमानिकं वा ? आद्ये, वस्तुनो विरुद्ध-द्वैरूप्यापत्त्याऽन्यतरमनयोः सदोषमिति निश्चिते किं तदिति जिज्ञासायां जातिवादिना सम्बन्धाकारमासञ्जिते हेतौ विशिष्यापरिचितपक्षादिपरिभागेऽनुमानाङ्गरूपवैकल्या-वैकल्यरूपविचारस्यानवसरपराहतत्वात्तत्र सदोषत्वशङ्का जागरूका। वादिप्रतियुक्ते च कृतकत्वादिहेतौ विशेष्यनिश्चयाभेदोऽर्थाभावो योग्यानुपलब्ध्या निर्णीत इति तस्याधिकरणस्य न हीनबलेन प्रतिरोधः। द्वितीये तु प्रत्युत्तरसूत्रार्थपर्यालोचनैवास्ताम्।

ननु स्थापनाहेतौ योग्यानुपलब्ध्यायोग्याङ्गवैकल्याभावनिर्णयेऽप्ययोग्योपाधिरेव दूषणं स्यात्। अथ साध्यव्यापकोपाधिव्यावृत्त्या वादिसाध्यव्यावृत्तिसिद्धावपि प्रतिवादिसाध्यासिद्धिः; व्यापकनिवृत्त्या व्याप्यस्यैव निवृत्तेः। यद्यपि नित्यत्वा-नित्यत्वविवादे तावतैव कृतार्थता, तथापि विवादान्तरे कथं स्वपक्षसिद्धिरिति चेन्न, वादिसाध्याव्यावृत्तिरेव सत्पक्षतया तत्र प्रमाणसम्भवात्। तथापि स्थापनाहेतोः सोपाधित्वे प्रतिहेतोश्च निरूपाधित्वे हीनाधिकबलयोः बाध्यबाधकभावः स्यात्, नतु प्रतिरोध्यप्रतिरोधकत्वमिति चेन्न। तत्प्रतिसाधनदशायां तत्त्वात्; वस्तुगतिपरामर्शे च बाधस्यैवोचितत्वात्।

मैवम्। त्वद्धेतावस्य दृश्योपाध्यभावस्य योग्यानुपलब्धेरशक्यग्रहत्वात्। तथा सति तस्यैव विशेषतोऽनवगतस्य सोपाधित्वापत्तेः, अदृश्ये साधकबाधकमानाप्रसरे-णोपाधिसन्देह एव दूषणमस्त्विति चेन्न। स्थापनायामिव जातिवाद्युक्तहेतावप्युपाधि-सन्देहवर्णनाविशेषात्, तेन प्रतिरोधस्याशक्यत्वात्।

अथ साध्यव्यापकरहितत्वादित्यत्र प्रतिहेतौ नोपाधिः शङ्कितुं शक्यत इति तेन प्रतिरोधः स्यादिति चेन्न। तेनोपाधिसन्देहात्, सन्दिग्धेन प्रतिरोधस्याशक्यत्वात्। उपाधिसन्देह एव दूषणमस्त्विति चेत्तर्हि, नेदं साधनं सर्वथाऽनुपलभ्यमानोपाधि-शङ्काग्रस्तत्वादिति वाक्यार्थः। तदिदमनुत्तरम्, स्वार्थप्रतिक्षेपकत्वात्। अथ नेदं साधनं, असिद्धव्याप्तिकत्वात्। तादृशञ्चेदं, सन्दिग्धोपाधिकत्वात्।

एवञ्च स्वार्थप्रतिक्षेपोऽपि न, विपक्षबाधकेन विशेषात्। तथा हि—असिद्ध-व्याप्तिकस्यापि गमकत्वे सर्वं सर्वस्मा०[दपि सिद्धचेत्] उपाधिसन्देहे च न व्याप्ति-सिद्धिः, उपाध्यभावस्य व्याप्तित्वादिति चेन्न, स्थापनाहेतौ विपक्षबाधकेन साध्य-व्याप्यत्वे निश्चिते साध्यव्यापकाव्यापकत्वेनोपाधेः साध्याव्यापकत्वात्। तर्कमूल-व्याप्तेरप्युपाधिसन्देहात् सन्देह इति चेन्न। तर्कमूलव्याप्तौ स्वक्रियाव्याघातेन शङ्कानुदयात्। शङ्कायाः व्याघातावार[क]त्वादित्यन्यत्र विस्तरः।

वस्तुतः साधनस्य विशेषतः सिद्धिरपि साध्यसिद्धावङ्गम्। न हि लिङ्गत्वोप-यिकरूपसम्पन्नं किञ्चिदिहास्तीति ज्ञानमेव लैङ्गिकसिद्धयङ्गम्। तदिदं युक्ताङ्ग-

हीनत्वम् । उक्तरूपाणां विशिष्टव्यतिरेकञ्च पञ्चानां सर्वत्र सम्भवात् । सर्वत्रोपपत्तेः कारणं प्रमाणमनुज्ञातं स्यादिति सर्वविचार्योपप्लव इति स्वव्याघातकत्वमित्यपि सूत्रार्थः ।

वस्तुतः तेषां जातित्वमेव नास्ति, कस्य संग्रहार्थं यथोक्तं लक्षणम् । न हि व्याप्तिपक्षधर्मते अनपेक्ष्य तेषां प्रवृत्तिः, तत्त्वादिना तथानङ्गीकारात् । अत एव न व्याघातकोत्तरत्वमपि, विपक्षबाधकतर्कविरहत्वे तेषामसाधकत्वमिति ।५।१।२६।

[उपलब्धिसमप्रकरणम्]

उपपत्तिसमे कारणं निरूपकम्, इह तु तदभावः, तस्य च प्रतियोगिनिरूप्यत्वसंगत्या सूत्रम्—

**निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ।५।१।२७।**

वादिना **निर्दिष्टस्योपन्यस्तस्य कारणस्य** हेतोः कारकस्य ज्ञापकस्य [वा], व्यापारिणः तद्व्यापारस्य वा, **अभावेऽपि** साध्यस्य कार्यस्य वा, **उपलम्भात्**—उत्पत्तेरुपलब्धेर्वा, प्रत्यवस्थानमुपलब्धिसम इत्यर्थः । प्रयोजकमात्रे तात्पर्यात्, विशेषस्यानाकङ्क्षितत्वात्, गौरवाच्च । केवलव्यापारिव्यतिरेके[ण]चापादनं व्याप्यते । न व्यव[तु]हेतुस्वरूपाभावो विवक्षितः । किन्तु व्याप्रियमाणाभावः, अपि सतः [द] सद्भावे तदुपलम्भस्य वाद्यभिमतस्यापेक्षया ।

यद्यप्यत्रावधारणं न श्रूयते, तथाप्यस्याभावेऽप्येतदुपलभ्यत इति दूषणं दूष्यस्यावधारणात्मकतां सूचयति । यदि हि स्थापयिता नियमो[मे]नोपक्रमे, तदेवमेतद्विरहेणाप्येतदुपलम्भादिति प्रत्यवस्थानं संबध्यते । यद्यपि सूत्राद्यथाश्रुतात्तद्बलेनोपलम्भ इति न तदभाववत्युपलम्भादित्यन्ययोगव्यवच्छेदा एवावधारणाभ्यो गम्यते । तथापि व्यवच्छेदमात्रानुपपत्त्यैवान्वये सम्भवति सामान्यस्य शीघ्रोपस्थितत्वेन तद्विशेषस्यानाकाङ्क्षितत्वेन चान्वयाभावात्तस्यान्वयः । तत्रावधारणविकल्पानुपपत्त्या प्रत्यवस्थानमुपलब्धिसम इति लक्षणम् । न । सदुत्तरेऽपि गतत्वात् । नाप्यवधारणविकल्पमात्रानुपपत्त्या प्रत्यवस्थानम्, मात्रपदेन व्याप्तेः व्यवच्छेदतया यत्रासदुपायेन व्याप्तिं पुरस्कृत्यावधारणविकल्पं करोति, तत्रापि जातित्वानपायात् । नापि प्रयोजकत्वानभिमतविशिष्टव्यतिरिक्तसाहचर्योपालम्भात् प्रयोजकत्वाभिमतस्याप्रयोजकत्वापादनमुपलब्धिसमः । समव्याप्तिकेऽपि तत्तद्व्यापारविशिष्टस्य व्यतिरेकेण साहचर्यात् तदुपग्रहोऽपीति मतम् । व० सम्बन्धप्रयोजकत्वाभिमतस्य प्रमेयत्वस्य व्यतिरेकसाहचर्यात्, अप्रयोजकत्वापादने सदुत्तरेऽपि गतत्वात् । नाप्ययोगान्ययोगव्यवच्छेदव्याप्यः सम्बन्ध इत्यभिमानिनः प्रत्यवस्थानम्, एकैकव्याप्त्यभिमानवत् प्रत्यवस्थानाव्याप्तेः । किन्तु प्रयोजकार्थावधारणदूषणेन स्वव्याघातकमुत्तरमुपलब्धिसम इति लक्षणम् ।

उत्थानबीजन्तु सर्वविशेषणविशेष्यभावेन पदार्थानामन्वयः । स च व्यवच्छेदफलः । व्यवच्छेदस्तु अन्ययोगस्य, अयोगस्य, अत्यन्तायोगस्य वा ? तत्र कृतिपक्षे तृणं वह्निना किमन्ययोगव्यवच्छेदेन सम्बध्यते, अयोगव्यवच्छेदन वा, अत्यन्तायोगव्यवच्छेदेन वा ?

नाद्यः, अन्यस्मादपि तद्भावात् । न च स्वार्थप्रतिक्षेपकत्वान्नेयं जातिः । तत्रैकोपाधिकरणककारणताव्युदासपरत्वात् । न द्वितीयः, तृणं विनापि कदाचिदन्युपलब्धेः । नान्त्यः, स्वकारणसाधारणत्वात् । ज्ञप्तिपक्षे 'पर्वतोऽयमग्निमान्' इत्युक्ते किं पर्वत एव [अग्निमान्] अग्निमानेव[वा] पर्वतः ? नाद्यः, दृष्टान्तासिद्ध्यापत्तेः । नान्त्यः, बाधात् धूमादेरप्युपलब्धेः । अन्यथा हेतोः स्वरूपासिद्धेः । न द्वितीयः, कदाचिदग्निमतोऽपि तस्याभावात् । न तृतीयः, कदापि वह्निज्ञानस्य तदर्थे प्रवृत्त्यहेतुत्वात् ।

सेयं त्रिधा, व्यवच्छेदत्रयमुखेन प्रवृत्तेः । यथासम्भवं सकलदूषणाभासा चेयम् ।

आचार्यास्तु पञ्चधेत्याहुः । तथा हि-साध्याभावेऽपि धर्म्युपलभ्यत इति बाधः । साधनाभावेऽपि धर्म्युपलभ्यत इत्यसिद्धिः । उभयाभावेऽपि धर्म्युपलभ्यत इति उभयम् । साधनाभावेऽपि साध्यधर्मं उपलभ्यत इत्यव्याप्तिः । साध्यधर्माभावेऽपि साधनधर्मं उपलभ्यत इत्यतिव्याप्तिरिति [बोधसिद्धौ]

तत्र प्रथमे एवं प्रवर्तते-'पर्वतोऽयमग्निमान्' इत्युक्ते किं पर्वत एव अग्निमान्, उत पर्वतोऽग्निमानेव ? नाद्यः, महानसादीनामपि वह्निमत्त्वोपलब्धेः । नान्त्यः, अग्निं विनाप्यस्योपलब्धेः । द्वितीया तु धूमवत्त्वादित्युक्ते धूमोऽपि धर्मिणा किमन्ययोगव्यवच्छेदन सम्बध्यते, उत अयोगव्यवच्छेदेन । नाद्यः, पर्वते वृक्षादीनामप्युपलब्धेः । नान्त्यः, निर्धूमस्यापि तस्य कदाचिदुपलब्धेः । तृतीया, उक्त समाहारेण द्रष्टव्या । चतुर्थी तु 'पर्वतोऽग्निमान् धूमवत्त्वात्' इत्युक्ते, किमत्रावधार्यते । किं पर्वत एव, अथाग्निमानेव, यद्वा धूमवत्त्वादेव ? नाद्यः, महानसादीनामपि तत्त्वोपलम्भात् । न द्वितीयः, वृक्षादीनामपि तत्रोपलब्धेः । न तृतीयः, कदाचिदालोकादपि तदुपलब्धेः ।

ननु समव्याप्तिके कृतकत्वादेव[नित्यत्वादौ] एतदुक्तमशक्यमेव । यदि हि हेतुस्तत्र नास्ति, तदा साध्यमपि नास्तीत्यवश्यं सिषाधयिषितधर्मिणि तस्य स्वीकार्यत्वे, तत एवानुमानमिति चेत्, सदपि समव्याप्तिकं कृतकत्वमापाद्यमानं तत्रानुपयुक्तम्, निर्व्यापारस्याकारणत्वात् । परामर्शस्यैव तद्व्यापारत्वात् । तथाच साधनान्तरादपि साध्यावगतिस्तत्रापि वक्तुं शक्यते । अपरामृश्यमाणतया तस्य सतोऽप्यसत् कल्पत्वात् । पञ्चमी तु, अन्वयिसंभवे सदुत्तरमेव, साधनस्य साध्याभावस्य साहचर्याभावात् । सा च जातिसामान्यलक्षणैव व्यवच्छिन्नेति नातिप्रसङ्गः ।

न चैवम्, उदाहरणानुपपत्ते [:] पञ्चम्या स्वभावः केवलव्यतिरेकिणि [वक्तुं] शक्यते। एवं पर्वतोऽग्निमान् द्रव्यत्वादित्यत्र किं द्रव्यत्वाद्वह्निमानेव, तत एव वा वह्निमान्। नाद्यः, ततः संयोगादेरपि सम्भवात्। अन्त्ये, द्रव्यत्वमनियतम्, अग्निं विनाऽप्यस्तीत्युक्ति[वैचित्र्या] देवोज्जातिरेवान्वयिन्यपि।

ननु तृतीयायाः प्रथम-द्वितीयपक्षसमाहाररूपत्वात् तयोरेवान्तर्भावात् विभागोऽधिकः। नचोक्तिवैचित्र्यभेदः। एवं प्रथमपञ्चमादिपक्षसमाहारस्यापि विधान्तरापत्तेः। न। गोवृषन्यायेन प्रथम-द्वितीयप्रकाराभ्यां तृतीयप्रकारान्यप्रकारस्याविवक्षितत्वात्। उक्तिवैचित्र्यमादायोक्तिसमाहारमात्रेणाविशेषितस्यैकस्यैव प्रकारस्य विवक्षिता[तत्वा]द्वा। उदाहरणमात्रत्वेन च साध्याभावसाधनाभावसमाहारोपयोगात्, धर्मिपदेनात्र विशेष्यमात्रस्य पक्षदृष्टान्तादेः सर्वस्यैवाभिधानात्। साध्यपदेन साधनान्यसकलविशेषस्याभिधानम्, तेन विशिष्टहेतुपक्षदृष्टान्तेषु विशेषणाविशेष्ययोरप्ययोगान्ययोगाभ्यां पक्षदृष्टान्तादावपि[1] साध्यसाधने उपादायावधारणविकल्पेन प्रत्यवस्थानसंग्रहः। तथाप्यवधारणविकल्पो न तावदवधारणमात्रेण, पराभ्युपगममात्रेण, परस्य तथानङ्गीकारात्। नापि पराङ्गीकारानङ्गीकारारोपात्। कल्पितदूष्यतयाच्छलत्वापत्तेः। एवमेव दूषणाभिधानेऽर्थान्तरमिति चेन्न। जातिवादिनः परिशेषमुखप्रवृत्तत्वात्। शब्दतात्पर्यसञ्चारेण च लक्षणाभावाच्च ।५।१।२७।

अत्र प्रत्युत्तरसूत्रम्—

**कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ।५।१।२८।**

कारणान्तरादपि प्रयोजकान्तरादपि तद्धर्मस्य व्यवच्छेद्यत्वाभिमतस्य [अत्र मातृका भग्ना प्रतिभाति]..........................................

[अनुपलब्धिसमप्रकरणम्]

**तदनुपलब्धेरनुपलम्भादभावसिद्धौ**
**तद्विपरीतोपपत्तेरनुपलब्धिसमः ।५।१।२९।**

..................................................................................

..................................................................[अत्र मातृका भग्ना प्रतिभाति]

साधनस्य कर्मत्वम्, अन्यत्र तथा दर्शनादिति तदनुपलब्धिर्वाच्या। तथा चानुपलब्धेरेवानुपलब्धेर्विपरीतस्य घटाद्युपलम्भस्योपपत्तेः घटादिसद्भाव एव प्राप्तः।

यद्यप्यव्यापकमिदमनिष्टसमादीनामपि, दर्शनात्, अनुपलब्धितुल्ययोगक्षेमत्वात्, अन्यत्र तद[न]न्तर्भावाच्च। तथाप्यनुपलब्ध्या विषयीधर्म उपलक्ष्यते। न चोपलब्धिविषयिणी[तत्]कत्वमुपलब्धिः,[2] तदभाव इति वाच्यम्। साक्षात्परम्परा-

१. पक्षवत् दृष्टान्तादावपि ख.

२. कत्वनुपलब्धिः। ख

साधारणस्य विषयतासम्बन्धस्य विवक्षितत्वात् । तेनोपलब्ध्यनुपलब्धी, इच्छानिच्छा, द्वेषाद्वेष-कृत्यकृति-शक्त्यशक्ति-उत्पत्त्यनुत्पत्ति-व्यवहृत्यव्यवहृत्यादयः संगृहयन्ते ।

यद्वा विषयत्वेनेतरनिरूपणाधीननिरूपणा धर्माः विवक्षिताः । तेन सह[1] प्रतियोगिका अनुपलब्ध्यादयः सावधिकाश्च पृथक्त्वादयः संगृहीताः । स्ववृत्तित्वा-स्ववृत्तित्वखण्डनेन स्वात्मनि तद्गत[2]रूपवैकल्यानुपपत्त्या स्वव्याघातकमुत्तरमनुपलब्धिसम इति लक्षणम् ।

[ननु चानुपलब्धेरुपलब्धि] रूपतया सैवोपलक्षणमस्तु, प्रथमधीवेद्यातिक्रमे कारणाभावात् । सकलसविषयकतया विषयिधर्मेषु तस्यामूर्धाभिषिक्तत्वाच्च । उपलब्धिसमानामसङ्करतया न तथेति चेन्न । सङ्करधारणा यदि,[तदा]एकत्र ज्ञप्त्यादि-पदमस्तु, पूर्वंज्ञप्तेरनुपलब्धिरिति चेत्. समेति वा मास्तु । निर्दिष्टकारणानुपलम्भ-कार्योपलम्भवत् । कार्योपलम्भे निर्दिष्टकारणानुपलम्भप्रदर्शनेन[अ]साधारणविकल्प-नाभा[स]विशेषात् । अस्यास्तूपलब्धिसमेति । किञ्चायमपि लक्षणकोटौ परिहारः । लक्ष्यनिर्देशस्यैव समानत्वात्, न तु तदनुपलब्धेरनुपलम्भादिति लक्षणकोटौ ।

अत्राहुः—उपलब्धिपदो[पस्थाप्ये]पदार्थे साक्षाद्विषयित्वस्यैवोपलक्षणमिति त्रयेण[?]परम्परासम्बन्धमादाय प्रवृत्तजातिनामसंग्रहः स्यादिति लक्षणमव्यापकं स्यात् । अपि च लक्षणेऽप्युपलब्धिपदोपादाने लक्ष्यपदोपस्थापितेऽनुपलब्ध्या स्वव्या-घातकत्वे लक्ष्यलक्षणपदयोः विरोधावभासेनान्वयः ।

ननु प्रसङ्गश्च, अनुपलब्धिपदोपादाने तु परम्परयापि विषयित्वसम्बन्धो लक्ष्यते । तर्ह्यविषयित्वेन परम्परासंवन्धात् । अत एवैकत्र ज्ञप्त्यादिपदोपादानमपि प्रत्युक्तम्, परम्पराविषयित्वसम्बन्धलाभादुक्तान्वयधीविलम्वाच्च । न च सामप[पि]विवर्तः । पूर्वत्र नञुपादाने गौरवात् । इहोपलब्धिपदोपादाने साक्षाद्विषयिता भ्रमः स्यादित्युक्तम् ।

नव्यास्तु, अत्र यद्यनुपलब्धिरुपलभ्यते, सर्वथानुपलब्धिः नास्तीति दर्शितम् । तथाचान्यत्रापि तुल्ययोगक्षेमत्वादात्मनि तदतद्रूपता विकल्पानुपपत्त्या तन्निरासेन इति लक्षणम् । एवञ्चावश्यकतया स्वात्मन्युक्तानुपपत्त्या प्रत्यवस्थानमित्यन्वयेनैवो-पपत्तौ, अनाकाङ्क्षितत्वात्, व्यवच्छेद्यानध्यवसाच्च । नानुपलब्धेः लक्षणे प्रवेशः, विशिष्यत्रिविषयिधर्मोत्कीर्तनं तूदाहरणस्फोरणाय, अन्वर्थसंज्ञा त्वेकदेशपुरस्कारात् । अन्यथाऽनिष्टसमादीनामन्यान्तर्भूतानां जात्यन्तरत्वापत्तेः । यद्यप्युपलब्धिः घटादि-पदोपादानेऽप्येषा संभवत्येव । तथाप्युपलब्धिपदोपादाने विषयित्वपुरस्कारभ्रमो, घटादिपदोपादाने चाविषयित्वमेव तन्त्रमिति भ्रमो मा भूदित्यभिप्रेत्यानुपलब्धिपदो-पादानम्, अत्र ह्युपलब्ध्या विषयिणां, नञा चाविषयिणामुपसंग्रहे सर्वसंग्रह इत्याहुः ।

अन्ये तु विषयित्वमेव तत्र धर्मिस्वरूपे विकल्पार्थं धर्मापेक्षायामुपस्थितस्य विषयित्वस्यैवान्वयाल्लाघवात् । न चैवमनुपलब्धिरपि विवक्षिता स्यात् । सामान्या-

१. 'सह' इति ख पाठे नास्ति ।

२. इतः लक्षणपर्यन्तं ख पुस्तके नास्ति ।

न्वये विशेषस्थानाकाङ्क्षितत्वात् । अनुपलब्धिग्रहणं तु परम्परयापि विषयित्वसम्बन्ध-प्राप्त्यर्थमित्याहुः ।

एतेन यद्विषयिधर्मेष्वेव भावभागमाकृष्योपलब्धिसमालक्षणमभावभागमादायानुपलब्धिसमालक्षणं कैश्चिद्व्याख्यातं, तदपास्तम् । पूर्वोपदर्शितोपलब्धिसमोदाहरणाव्यापनात् । भाववदभावेऽप्यवधारणानुपपत्तेः । स्वस्मिन् तत्तद्रूपतानुपपत्तेश्च तुल्यत्वेनोभयपुरस्कारात् । अन्यथा तज्जात्यन्तरापत्तेः । अस्याश्चानुपलब्धिसमेत्युपलक्षणसमे विषयिधर्मसमेत्यन्वये नाम सूत्रकारस्य चोपलक्षणत्वं स्वमत्युन्नयनम्, अनिष्टसमादीनामप्युदाहरणसंभवात् तल्लक्षणान्तराप्रणयनात् ।

अथ यथाश्रुते तज्जातिविशेषलक्षणानाक्रान्तासम्बन्धोत्तराणामानन्त्ये जातिविभागभङ्गभीरुणाऽवश्यं चतुर्विंशत्यन्यतमा जातिराकृतिगणत्वेनोपेया । तथा च तत्रैवानिष्टसमादीनामन्तर्भावसम्भवे लक्षणान्तराप्रणयणोपपत्तिरिति चेत्, आकृतिगणत्वस्य विनिगन्तुमशक्यतया व्याकरणादिसूत्रवत् कर्तृत आरभ्यत तदर्थन्तरत्वसिद्धिरूप देशपरम्परयैवेति । तयैवोपपत्तिसमायामेवाकृतिगणत्वं वाच्यम् । तथाऽनुपलब्धिसमायामेवानिष्टसमादीनामन्तर्भावो वाच्यः । तथैवोपदेशपारम्पर्यात् । भवति हि 'व्याख्यानतोऽर्थप्रतिपत्ति'रिति न्यायात् ।

किञ्च संशयपरीक्षायां विप्रतिपत्तिं संशयकारणं निराकुर्वता जात्या पूर्वपक्षे सूत्रितम्—

**'विप्रतिपत्तौ च सम्प्रतिपत्तेः' [२।१।३] इति ।**

विप्रतिपत्तिर्हि[?]आत्मनि विप्रतिपत्तिर्नवा ? आद्ये विप्रतिपत्तिविषयतया स्वयमनिश्चितसद्भावः कथं संशयं प्रस्रवीत । उत्तरत्र संप्रतिपत्तिरूपत्वान्न विप्रतिपत्तित्वम् । तथोपलब्ध्यनुपलब्ध्यव्यवस्थायाः संशयहेतुत्वं निराकुर्वता सूत्रितम्—

**'अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः' [२-१-४] इति ।**

अव्यवस्थायाः स्वात्मन्यवस्थितौ, अव्यवस्थानियमाभावादव्यवस्थातः संशयानुत्पत्तिः । व्यवस्थितत्वे च व्यवस्थास्वरूपस्य तद्विपरीतरूपादनुत्पत्तेरित्यर्थात् । सूत्रकारानुमत्युन्नयनात् ।

ननु वाक्छलमिदम्, न तु जातिः । अत एव "शब्दोऽनित्यो, अभ्यासात् । अभ्यस्यमानस्यावस्थानदर्शनात् । यथा पञ्चत्यो [त्वो] रूपं पश्यति, अ[वस्थि] तशब्दस्याभ्यासोद्देशकृत्वोऽनुवाकमधीत" इति मीमांसकेनोक्ते, अभ्यासो नावस्थानियतोऽ[न]वस्थानेऽपि दर्शनात् । द्विवा[द्विर्वा]नृत्यन् त्रिभुक्ते [?]प्रतिसिद्धान्तिको[नो]क्तम् । तत्र मीमांसकस्य प्रत्यवस्थानमन्यदन्यस्मादन्यदित्यन्यताभाव इति । अन्यत्वं हि भेदः, स किं स्वस्मादभिन्नो भिन्नोवा ? चरमे भेदादन्यस्य न भेदत्वमनवस्था च । आद्ये तु, अभेदस्वरूपस्य तद्विरुद्धभेदरूपानुपपत्तिः, अतो भेद एव नास्ति, तथा शब्दपरिणामनिरासे सिद्धान्तिनोक्तम् । प्रकृतिविकारभावे [ऽ] नियमो दृष्टान्तः, यथा 'क्षीरस्य दधिविकारः' 'न दध्नः क्षीरम्', शब्दे तु नायं नियमः । 'दध्यत्रेत्यत्र हि इकारस्य स्थाने यकारो, विध्यतीत्यत्र वैपरीत्यमिति ।

अत्र पूर्वपक्षसूत्रम्—

"अनियमे नियमान्नानियमः" [२-२-५५] इति ।

अनियमश्चेदनियतो नानियमः । नियमस्यासंभवात् । नियतश्चेदनियतरूपत्वानुपपत्तिरितीयं द्विसूत्रीटीकाकृता वाक्छलत्वेनैव व्याख्याता ।

मैवम् । एवं ह्यनुपलब्धिमात्रप्रतिष्ठा[ऽ]प्यनुपलब्धिसमा, तद्वच्छलमेव स्यात् । तज्जातित्वे तवापि संप्रतिपत्ते । विषयिधर्ममात्रोपलक्षणत्वे विप्रतिपत्तेः ।

अथ कल्पितदूष्यं दूषणं छलम्, ततो यदि वादिविवक्षितमर्थं तिरस्कृत्याविवक्षितमारोप्य दूषणं स्यात्तदा छलत्वम् । अत्र तु अनुपलब्धि , स्वात्मन्यनुपलब्धिः न वेति विकल्प्य दूषणमिति । वादि विवक्षितमपि विकल्पानुकृतम्, अतो न तल्लक्षणयोगः ।

किञ्चच्छलं भवदिदं वाक्छलम्, उपचारच्छलं, सामान्यच्छलं वा स्यात् ? नाद्यः, 'नेपालादागतोऽयं नवकम्बल [व] त्वात्' इत्युक्ते कुतोऽस्य नवकम्बलाः, एक एवास्य कम्बलो यतः, इतिवत्, अभिधावृत्तिव्यत्ययाभावात् । न द्वितीयः, घटज्ञानवानयं, घटोच्चारयितृत्वात्, इत्युक्तेऽसिद्धोऽयम्, अशब्दस्यानर्थत्वादितिवदुपचारवृत्तिव्यत्ययाभावात् । न तृतीयः, शब्दोऽनित्यः कृतकत्वादित्युक्ते साध्याविशिष्टोऽयमितिवत् तात्पर्यवृत्तिव्यत्ययाभावात् ।

नच चतुर्थश्छलप्रकारोऽस्ति, निर्विशेषस्य च सामान्यस्यानुपपत्तेरिति तुल्यमेतदनिष्टसमादीनामपि । कथं तर्हि टीकाकारोऽन्यानियमयोरनन्यत्वनियमाभ्यां प्रत्यवस्थानं वाक्छलमित्याह । इत्थमनुपलब्धिपदस्योपलब्ध्यभाववाचिन उपलब्धितिरश्चीनवृत्तिरुपलब्ध्यभावाश्रयो वाच्यः, न स्वात्मा, तस्यापि अनुपलब्धिपदवाच्यत्वमारोप्य दूषयतश्छलम् । अनुपलब्धिपदेन तूपलब्ध्याभाव स्वरूपेऽभिहिते तस्य घटमिव स्वमिति प्रतिविषयित्वं न वेति विकल्प्य दूषयतो जातिः । घटानुपलब्धेर्घट एव विषयो न स्वात्मा, प्रकृतिप्रकृतिविकारभावा[दि]नियमस्य स एव संबन्धी न स्वात्मा, नृत्यव्यक्तिभेदस्यनृत्य[व्यक्त्य]न्तरमेव बाधधीः, न स्वात्मेति व्यवस्थितौ, यन्नियतयावद्रूपादयोऽर्थाः तन्नियततद्रूपतदर्थवाचिन एव तच्छब्दा इत्यस्याप्यर्थस्य व्यवस्थायां तेषां शब्दानां तत्तन्नियतरूपोल्लङ्घनेन स्वपरसाधारणार्थकल्पनायां छलं यदा तु नैवम्, तदा जातिरिति तत्त्वम् । तदियं विषयिधर्मसमेवं प्रवर्तते । उपलब्धं लिङ्गादि सिद्ध्यङ्गमिति तदर्थं प्रयोगः । तदुपलब्धिरुपलब्धिरूपेणावृत्ते र्न साधूपलब्धिरिति कथं तद्वृत्ते र्हेत्वाद्युपलब्धं स्यादिति व्यर्थः प्रयोगः । एवमनुपलब्धिः स्वात्मनि ताद्रूप्यो वर्तते, न वा वर्तते चेद्विषयवदनुपलब्ध्या स्यात् । तथा च तद्वदेव तदभावः स्यात् । स चोपलब्धिरूपविपरीतापत्तिः । नेति पक्षे स्वात्मनि स्वरूपेणावृत्तेः, न स्यादेवेत्यतो विपरीतापत्तिः । उभयथात्वे हेतुः, सोऽसिद्धः । अथवा ताद्रूप्येण स्वात्मनि वृत्तावपि अनुपलब्धिर्नानुपलब्धा, न वा नास्ति, तद्वत्तर्हि विषयोऽपि नानुपलब्धो नवा न स्यादित्यनैकान्तिको हेतुः ।

एवमिच्छाऽऽत्मनि ताद्रूप्येण वर्तते न वा। तत्र ह्येतद्विषयवदिष्टत्वात् नेच्छा, अन्त्ये आत्मनि[1] स्वरूपेणावृत्तेः न स्यादेव। एवमनिच्छाकृतिद्वेषाः यद्यात्मनि वर्तन्ते तदा पूर्ववदनिष्टकृद्द्विष्टाः स्युः। न चेत्तर्हि न तद्वशादन्येऽप्यनिष्टकृतद्विष्टाः। एवं कामादिष्वपि बोद्धव्यम्।

सामान्यतस्त्वेवं प्रवर्तते—'पर्वतोऽग्निमान् धूमवत्त्वात्' इत्युक्ते [पर्वतः] आत्मनि पर्वतरूपवान्नवा ? पूर्वत्रात्माश्रयः। अन्त्ये नासौ पर्वतः न हि स्वात्मन्यपर्वतः सर्वतो विरोधादित्याश्रायासिद्धिः। एवं साध्याप्रसिद्धिहेत्वसिद्ध्यादयो वाच्याः। तद्विशेषे सन्दिग्धे न्यायः प्रवर्तते। तत्र सन्देहस्य स्वात्मनि वृत्तौ सन्दिग्धः सन्देहः कथमन्यं व्यवच्छिन्द्यात्। अवृत्तौ सन्देहो न स्यादेवेति न्यायविषयाभावः। एवं भ्रमप्रमेया वाच्यम् [?]तदन्याः स्वात्मनि तदतद्रूपतापत्तिः मूलं, प्रयोगो दूष्यः। प्रतिकूलतर्कत्वमारोप्यम्। अतिपीड़याऽसिद्ध्यनैकान्तिकत्वञ्च, तदाभासा चेयम्। ५।१।२९।

दुष्टत्वमूलसूत्रन्तु—

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ।५।१।३०।**

उपलम्भात्मकत्वादुपलब्धेरित्याद्युपलक्षणीयमिति न प्रत्युत्तरसूत्रस्य न्यूनत्वम्। अक्षरार्थस्तु अनुपलब्धिः स्वात्मन्यनुपलब्धिर्नवेति कोऽर्थः, किं प्रवृत्तिः, स्वाविषया वा स्वाभिन्ना न वेति ? नाद्यः, अनुपलब्धिः यदि प्रागभावः, प्रध्वंसो वा तदा स्वात्मनि वर्तते।

अथात्यन्ताभावः, स स्वात्मनि वर्तत एव। इह नास्तीति प्रतीत्यविशेषात्। तथापि नानुपलब्धित्वे विरोधः। प्रमेयत्ववदात्माश्रयस्यादोषत्वात्। अथ न वर्तते स्वात्मनि तथापि न क्षतिः। आत्माश्रयत्वात्, दोषत्वात्। अथ न वर्तते, न हि स्वावृत्ति र्भवत्येव। न द्वितीयः, अ [स्व] विषयत्वानङ्गीकारात्। तथा च कथं स्वविषयवदात्मानं प्रतिक्षिपेत्। न तृतीयः, अनुपलब्ध्यात्मकत्वस्य तस्याः स्वीकारादेव। न चैवं स्वप्रतिक्षेपाविरोधात्। तदिदमुक्तम्, अनुपलम्भात्मकत्वादनुपलब्धेरहेतुरिति, नानुपलब्धेः स्वविषयता प्रवृत्तिर्वोपेयते। किन्तु तदात्मकत्वमात्रम्। तथा चानुपलब्धिरेव न स्यादित्ययुक्तः। प्रतिषेधया तदिदमयुक्ताङ्गाधिकत्वम्, अयुक्तस्यैव स्वात्मनिषेधकत्वस्य स्वीकारात्। एवमुपलब्ध्यादावपि। तत्रापि स्वात्मकत्वेन स्ववृत्तिषु विष[य]योरभावात्। स्वविषयत्वेऽपि च नोपलब्धित्वविरोधः, विषयित्वस्याप्रच्यवात्। नाप्युपलक्ष[ण]तया घटादिवदनुपलब्धित्वं उपलब्धेः, उपलब्धित्वेऽपि तत्त्वाविरोधात्। अन्यथोपलब्धिप्रतिपादनव्याघातश्च।

एवं घटादिरपि स्वात्मकः, स्वात्मवृत्तिश्च, तावता तद्विरोधाभावात्। अन्यथा त्वदुक्तेऽपि तथा प्रसङ्गेन व्याघातः। अनैकान्तिकं घटाद्यभावसाधनेऽनुपलब्धिमात्रम्,

---

१. अन्ये स्वात्मनि ख.

अयोग्येऽपि गतत्वादित्यप्यहेतुः । अनुपलम्भात्मकत्वादनुपलब्धेः, योग्यताविशेषणविरहित्वादिति यावत् । योग्यानुपलब्धेः तत्साधकतया तन्मात्र इष्टापादनात् ।

एवं तर्ह्यनुपलब्धिमप्युपलब्धिरेव गमयेत् । तस्या अनुपलब्ध्यभावात्मकत्वात् । तदगमकत्वे चाभावावगतावपि तदसामर्थ्यापत्तिः । गमकत्वे चान्योन्याश्रयः । प्रतियोगिधीनिरूपणीयत्वाभावस्य प्रथममुपलब्धौ ज्ञातायामनुपलब्धेर्ज्ञानम्, अनुपलब्धेश्चानुपलब्धौ ज्ञानादित्यप्यहेतुः । अनुपलम्भात्मकत्वादनुपलब्धे र्निषेधकप्रमाणात्मकत्वात् । तेनोपलब्धेः भावरूपतया निषेधकप्रमाणविषयत्वं नास्ति । अतः स्वविषयसामर्थ्येऽपि न दोषः । अत एवोपलब्धेरनुपलब्ध्यनिरूप्यत्वेनान्योन्याश्रयोऽपि नास्तीत्यर्थः ।

ननु माभूदनुपलब्धिनिषेधकं प्रमाणं, तद्विधायकं तु किञ्चिदुपेयं, अन्यथा तदसिद्धिप्रसङ्गात् । ततस्तदेव प्रमाणत्वाविशेषादभावेऽपि मानमस्तु, कृतं निषेधकादेवाभावसिद्धिरिति विभागेनेति, अभावस्वरूपविधायकेनैवाभावो गम्यतामितीष्टापादनं प्रत्यक्षादिचतुष्टयान्यतमेत्यपि तथाविधमुखप्रत्य[य]जनकप्रमाणव्यक्त्या निषेधोऽपि विषयं क्रियतामित्यापादने विधिमुखप्रत्ययविषयत्वसभावेऽपि स्यादिति भाव एव न स्यात्, दूरे तद्ग्राहकचिन्ता ।

अथ विपर्यः कस्मान्न भवति, स्वभावविपर्ययप्रसङ्गात् । ननु यदि स्वभावविपर्ययप्रसङ्गार्था[र्थं]ग्राहकगम्यो भावः, तत्कथं भावोपलब्धेरभावानुपलम्भान्वयाद्यर्थविधानम् । तथाप्यहेतुत्वे कथमभावोपलब्धावपि भावानुपलब्धिहेतुत्वमितिचेत्, इत्थं भावोपलब्धावभावानुपलब्धेरन्वयव्यतिरेकावन्यथासिद्धौ । तथा हि—घटाभावानुपलम्भो घटोपलम्भप्रागभावरूप एव घटोपलम्भे हेतुः, लाघवात्, स्वभावस्तु अन्यथासिद्धः पृष्ठलग्नः, घटादिभावानुपलम्भे तु नैवम् ।

अन्ये तु, अभावानुपलब्धिपदेन पर्युदासवृत्त्या[स] प्रतियोगिकत्वाभावादित्याहुः । संसृष्टाधिकरणबुद्धेरन्याधिकरणबुद्धिरधिकरणसंसृष्टतया यो न भवत्येवम्भूत प्रतियोग्युपलब्धि र्वा विवक्षिता । सा चाभावोपलब्धावेव कारणं, न भावोपलब्धौ, तस्य सप्रतियोगिकत्वाभादित्याहुः । अभावानुपलब्धौ भावानुपलम्भवद्, भावोपलब्धौ अभावानुपलम्भः, कारणमविशेषात् ।शास्त्रे तु योग्यानुपलम्भादभावग्रह इत्येकदेशकीर्तनमिति नव्याः ।५।१।३०।

तथाप्यनुपलब्ध्यादेरनुपलम्भाद्यात्मकत्वम्, न तु स्ववृत्तिता, स्वविषयता वेत्येतदेव, तदेव कथमवधार्यत इत्यत आह—

**ज्ञानविकल्पानाञ्च भावाभावसंवेदनाध्यात्मम् ।५।१।३१।**

विकल्पो-विशेषः । इदमेतदात्मकमित्यादिधीविशेषाणां भावोऽभावश्च तयोः संवेदनमध्यात्मं, मानसप्रत्यक्षसिद्धम्, नापि मानान्तरापेक्षा । चकाराद् घटादेश्चक्षुरादिना यथासम्भवं भावाभावसंवेदनादित्यर्थः । अथवा भावाभावयोः विरोधा[धा]यक-

निषेधक-मानगम्यता कथं गम्यत इत्यत्रेदं सूत्रमुपतिष्ठते । अस्तिनास्त्युपलभते नोपलभत इत्यादयो ज्ञानविकल्पाः, तेषामध्यात्मं भावाभावसंवेदनान्नेदमुपपत्ति-साध्यमित्यर्थः।

यस्तु स्वात्मनिषेधकं, स्वात्मनिषेधरूपं वाऽन्यविषयकं प्रमाणमभ्युपगच्छे-दन्यदोषेण दुष्ट[म्]स्वान्यत्रासामर्थ्येना[न] समर्थं वा तस्य स्वोक्तिव्यापनात्; सर्वत्रव्याघातः। उपलब्ध्यनुपलब्ध्योः स्वविषयत्वेऽप्यन्यविषयत्वात्। नहि स्वविषय-त्वमेव वाऽन्यविषयत्वं, तन्नियतं वा, मानाभावात्। अत एव स्वाविषयत्वे मानाभावा-द्वित्तिरेव न सिद्ध्येत्यपास्तम्। चक्षुरादिवदन्यवेद्यत्वात् तर्हि तद्वदेव जगत्वा[?]पत्तिरिति चेत् न, विपक्षबाधकाभावेन तन्मूलव्याप्तेरसिद्धेः।

अथ विषयविषयिभावान्यथा०[नु]पपत्त्या नीलाकारत्वस्यैव वित्तेर्नीलवेद-नत्वात्। तथा च ज्ञानेन स्वाकारस्यैव ग्रहणे सति, आकारकादाचित्कतया बाह्यार्थ-सिद्धिरिति चेन्न। आकारस्य वित्तिस्वरूपवहिर्भावे, तथैव विषयविषयिभावानुपपत्तेः। तत्स्वरूपमात्रप्रतिष्ठितत्वे च ज्ञानस्वरूपमात्रप्रतिष्ठितत्वे च ज्ञानस्वरूपमात्रवेदनमेव नीलवेदनमिति सर्ववित्तीनां सर्वविषयत्वापत्तेः। स्वावित्तौ स्वविशिष्टार्थव्यवहार-विलोपप्रसङ्गः इति चेन्न। तावता तत्काले तद्वेदनसिद्धेः, न तु तेनैवेतीष्टापत्तेः। वैशिष्ट्यं च कारणत्वं विषयत्वं वा? नाद्यः कारणान्तरवदविरोधात्। नान्त्यः, प्रथमवित्त्युत्पत्तिमात्रेण तदसिद्धेः। तद्विषयत्वव्यवहारस्य तद्गोचरज्ञानान्तर-साध्यत्वात्।

सेयं जाति[श्चतुर्विं]वंशतोऽप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यतीति वदन्तं [धर्म ?]कीर्तिमपि व्यामोहितवती०भारता तदुपलम्भमात्र सिद्धः न तेनैवेत्यस्यापि सिद्धिः। नहि स्वाविषयत्वे वित्तेः नार्थविषयत्वं, येनोपलब्धिरात्मनि ताद्रूप्येण वर्तत इत्यभ्युपगम्येतेति।५।१।३१

[अनित्यसमप्रकरणम्]

अनुपलब्धिसमानित्यसमयोरभावनिरूप्यतयैकनिरूप्यत्वप्रसङ्ग[सङ्ग]त्या सूत्रम्—

**साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः।५।१।३२।**

साधर्म्यानित्यत्वपदे आपाद्यापादकधर्ममात्रोपलक्षणपरेऽऽपाद्यापादकसामान्यो-पस्थितेरावश्यकतयाऽऽकाङ्क्षितत्त्वेन च तदन्वयसम्भवे विशेषस्यानाकाङ्क्षितत्वेना-नन्वयात्। अन्यथा वैधर्म्येण साध्यान्तरेण च, एतादृशप्रत्यवस्थाने जात्यन्तर-त्वापत्तेः। अत्राद्ये प्रत्युत्तरसूत्रे प्रतिषेधासिद्धिरिति सामान्यवचनात् विशिष्यानित्य-त्वासिद्धिरित्यनभिधानात्। द्वितीये च धर्मस्येति सामान्यमभिधाय तस्य चोभयत्रा-भावादित्यनेन साधर्म्यवैधर्म्यरूपत्वप्रकटनात्, **सूत्रकारानुमतिरन्वीयते, साधर्म्या-**

दित्येकदेशानुवादः । अनित्यत्वमुदाहरणविशेषप्रदर्शनाय । पक्षसपक्षयोः साध्यपदेन न युक्तम्[उक्तत्वम्]अतः सर्वपदं विपक्षपरम् । न च सूत्रात् साध्यालाभः, तुल्यधर्मोपपत्तौ विशेषाकाङ्क्षायां प्राधान्यात् साध्येनैवान्वयात् । तथा च वाद्युक्तप्रयोगसाम्यमात्रेण विवक्षाभिमतस्य साध्यवत्त्वप्रसञ्जनमनित्यसम इति लक्षणम् । केवलान्वयिनि विपक्षाभावेऽपि विपक्षत्वादि सञ्जातिः । सपक्षस्य तु विपक्षत्वापादनं जात्यन्तरमेवाकृतिगणान्तर्भूतम् । सेयं उपलक्षणान्वर्थसंज्ञाभ्यां द्विनामा । उपलक्षणसंज्ञा—अनित्यसमा, अन्वर्थसंज्ञा-साध्यधर्मसमा ।

एवञ्च प्रवर्तते—शब्दोऽनित्यः कृतकत्वादित्युक्ते, यदि घटसाधर्म्यादनित्यः, तत एव प्रमेयद्वयोमान्य[० यत्वम०]प्यनित्यं स्यात् । तद्यथा–यद्याकाशवैधर्म्यादनित्यः शब्दः, त्रैलोक्यं तर्हि ततोऽनित्यं स्यात् । एवं यदि महानससाधर्म्यात् गिरिरग्निमान्, एवं ततस्त्रैलोक्यमग्निमद्भवेदिति ।

न चान्यस्याग्निमत्त्वेऽपि प्रकृतावमानाङ्क्षते[?]रभावादर्थान्तरं युक्त्यसम्भवो वा । धर्मान्तरेण धर्मान्तरापादनवत् प्रतिकूलदर्शनाभासतया तत्परिहारात् कथमविशेषसमातः स्याद्भेदः । तत्र पक्षादीनामविशेषमात्रोपादानात्, अत्र तु विपक्षस्य सपक्षत्वापादनेऽपि एकधर्मवत्त्वरूपस्य तस्य सत्त्वात् । साधर्म्यान्यधर्मेणाविशेषापादने ०यमिति चेन्न, विशेषवैयर्थ्यात् । साधर्म्यपदस्योपलक्षणत्वे विरोधाच्च ।

उच्यते, नेयमविशेषापादनरूपा, सपक्षलक्षणस्य धर्मस्य विपक्षमात्रनयनात् । अविशेषसमायान्तु सम्भूयाविशेषत्वमापाद्यम्, तथैव सूत्रपदादुपस्थितेः । अविशेषस्य सप्रतियोगित्वात्, साध्यवत्त्वरूपस्य च सपक्षस्यातातथात्वाद्वा तदसङ्करः । यत्र तु सप्रतियोगिकमेव साध्यं, पक्ष आपाद्यते, तत्र सङ्करेऽप्यदोष, तस्य कस्यचिद्धर्मस्य किञ्चित्प्रत्यसाधकत्वदर्शनं जनकम् । हेतुर्दूष्यः, असाधकत्वमारोप्यम्, आपाततः प्रतिकूलतर्काभासेयम् ।

अन्ये उपलक्षणत्वमस्य सूत्रस्य न मृष्यन्ते जात्यन्तरसंग्रहाय, अवश्योपलक्षणीयोपपत्तिसम एव तत्संग्रहान्तर्भावात् । उक्तलक्षणं विना यत्र कथञ्चित् साधनदूषणं, सोपपत्तिसमेति सिद्धान्तात् ।५।१।३२।

दुष्टत्वमूलचिन्तासूत्रम्—

**साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात् ।५।१।३३।**

**साधर्म्यात्** स्थापनायां प्रयोजकात् साध्यासिद्धिश्चेत् तर्हि त्वदुक्तस्य प्रतिषेधस्य जातिरूपस्यासिद्धिस्तवापि स्यात् । अतः **प्रतिषेध्यसाधर्म्यात्** प्रतिषेध्येन स्थापनाहेतु [ना]त्वदभिहितासाधकत्वेन प्रतिज्ञाद्यवयवयोगित्वादिरूपसाधर्म्यात् स्थापनाहेतोः धर्मत्वादेव तवासाधकत्वं विवक्षितं, असाधकसाधर्म्याद्वेति । यथा स्वव्याघातश्च त्वदुक्तस्यापि धर्मत्वादसाधकसाधर्म्यत्वाच्चेत्यर्थः । तदिदं युक्ताङ्गहीनत्वं व्याप्तेरनपेक्षणात् ।५।१।३३।

तदङ्गत्वप्रतिपादनार्थमाह

**दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्, तस्य चोभयथाभावान्नविशेषः ।५।१।३४।**

दृष्टान्ते निश्चितव्याप्तिकस्य धर्मत्वं हेतुत्वं, तस्य चोभयथाभावः । क्वचिदनुत्त[क्त] [र]ता, क्वचिद्व्यावृत्तता च । तथा च यदन्वयेन व्यतिरेकेण वा नियतं तद्गमकं, न तु तदुक्तरूपम्, व्यभिचारादिति नाविशेष इत्यर्थः ।

यत्तूभयथाभावो व्याप्यत्वाव्याप्यत्वाभ्याम् । तथा च व्याप्तं गमकं, नाव्याप्तं त्वदुक्तमित्यर्थः । ननु नित्यानित्यसमयोः विभागोद्देश्यक्रमातिक्रमः किमर्थः । तत्र वर्ण्यावर्ण्यसमवन्नित्यानित्यसमयोः मिथो विपर्ययात्मकत्वभ्रमनिरासार्थं इत्येके ।

तन्न, विभागोद्देश्यसूत्र एव तादृक् क्रमकरणापत्तेः । न हि तत्रान्यथाक्रमकथने किञ्चित्प्रयोजनमस्ति । तस्मादध्यायान्तरे प्रमाणादाविव वाक्यक्रमस्य सतात्पर्यकत्वे-नेहापि तच्छङ्का स्यादिति तन्निवृत्तिनिमित्तः व्यतिक्रमः । तेनात्र न प्रयोजनपरवश-क्रमः । किन्तु "क्रमभावित्वाद्वाचां न्यायात्" इति सूचनार्थं इत्यन्ये । तदपि न, न्यायप्राप्तक्रमसूचनार्थत्वपक्षेऽपि प्रथमजातावेवोद्देशविपरीतक्रमकरणापत्तेः । न हि तत्र यथोद्देशक्रमकरणे किञ्चित्प्रयोजनमस्तीति सा स्यात् ।

अथ कृते प्रयोजनं मृग्यते । न हि प्रयोजनमस्तीत्यन्यथाकरणम् । तदेदत् प्रकृतेऽपि समानम् । तस्मादेव[म्]वाच्यम् । विशेषलक्षणप्रतिपादकसूत्रादेव वर्ण्यावर्ण्य-समवदत्र क्रमो निरस्तः । क्रमव्यतिक्रमस्तु प्रमाणादिवन्नियतप्रयोजनकः क्रमः । किन्तूक्तहेतुहेतुमद्भावादिनिबन्धनः । स च यद्यपि च जात्यन्तरेऽपि सुवचः, तथापीदम-युक्तरूपमेवापेक्षा जात्युत्थितिरिति कृतिवैचित्र्यादेवोन्नेयम्, यथावै वेत्येवपरः ।

अथ भाष्यकारस्यैवं क्रमविपर्ययो, न तु सूत्रकारस्येत्येव किन्न स्यात् । भाष्यकारेण किमर्थं एवं कृतमितिचेत्, स्वव्याख्यानानियमज्ञापनार्थमेव । तेन क्वचित्सूत्रं पठित्वा क्वचित्तदपठित्वा तद्व्याख्यानं समाहितं भवति । मैवम्, सूत्रकारस्यै-वायं क्रमविपर्यास इति पूर्वाचार्यैः सानातनिप्रभृतिभिरप्यभिधानात् ।५।१।३४।

[नित्यसमप्रकरणम्]

धर्मस्य तदतद्रूपताविकल्पे धर्मोपलब्धेः कारणत्वात्तस्य च पूर्वभावित्व-सङ्गत्या सूत्रम्—

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ।५।१।३५।**

अनित्ये शब्दादौ नित्यं सर्वदा अनित्यभावोऽनित्यत्वं यतः, अतः शब्दादा-वनित्ये नित्यत्वोपपत्तिः सिद्धिः, जातिसमवायभिन्नधर्मनित्यत्वे धर्मिणोऽपि नित्यत्वात् ··तः प्रत्यवस्थानं नित्यसम इत्यक्षरार्थः ।

यद्यपि सूत्रैकसमधिगम्या जातिः, तत्र चोदाहरणविशेषश्रवणादुपलक्षणत्वानुपपत्तिः, तथापि 'कर्तृत आरभ्येत, तदर्थपरत्वमेतस्येति' व्याकरणसूत्रवदुपलक्षणार्थतया प्रसिद्धेः, तदर्थतयैव सूत्रं व्याख्येयम् । तथा हि—

अनित्यस्य भावोऽनित्यत्वमिति धर्मिविशेषोपस्थितौ तत्सामान्योपस्थितेरावश्यकत्वात्, प्राथमिकत्वात्, आकाङ्क्षितत्वाच्च, तमेवान्वयादुदाहरणान्तरे[1] सङ्कोचापत्तेश्च । नित्यत्वशब्देन सर्व एव विशेषणरूपा उपलक्ष्यन्ते । नित्यमनित्यभावादित्युत्थानबीजम् । तदतद्रूपताविकल्पोपलक्षणपरम् । अनित्येऽनित्यताभिमत इत्यत्र धर्मिमात्रं विवक्षितम् । नित्यत्वोपपत्तेरिति प्रसङ्गरूपतया तत्तत्साध्यानिष्टमात्रोपदर्शनप[र] रिमिति स्वीकृतिविरुद्धोपपत्तिर्विवक्षिता ।

यद्यपि तदद्रूपता तद्धर्मत्वात्तद्धर्मता । सा च सारूप्यविकल्पप्रत्यवस्थाननियतेति वैरूप्यविकल्पे प्रत्यवस्थानाव्यापकत्वम्, तथापि प्रकृतविवक्षितधर्मस्य यत्किञ्चिद्विरुद्धरूपविकल्पद्वारा धर्मिणि तद्वैशिष्ट्यनिराकरणे प्रत्यवस्थानं नित्यसम इति लक्षणम् । अत एव नानुपलब्धिसमसङ्करः, तत्र धर्मस्यैव स्ववृत्त्यविकल्पात् । स्वविषयत्वात् स्वविषयत्वविकल्पेन प्रत्यवस्थानात् । यद्यपि अन्वर्थसंज्ञा निरुक्तिरेवामूषां लक्षणमित्युक्तम् । नच कृतकत्वादनित्यत्वानुमानं विहाय नित्यसमापदं सङ्गतार्थम्, तथापि धर्मान्तिरे गौणीयं संज्ञा सुखदुःखवत् दृष्टान्ते साधनपारतन्त्र्यादिवत् । प्रकृते तु लक्षणमेव गुणः । अन्वर्थसंज्ञात्वमुदाहरणैकदेशमादाय क्वचित्केनाप्यर्थेनोपपद्यते ।

ननु नित्यसमेति संज्ञाया तत्तथाव्यवहारात् शक्तिरेवोचिता न गौणत्वम् । मुख्यार्थापरिचयेन दृष्टान्तदुःखपदवैषम्यञ्चेति चेन्न, नित्यपदात् नित्यस्योपस्थितेरावश्यकत्वादुपरञ्जकधर्मत्वेन शक्यलक्ष्यसाधारण्येनाजहत्स्वार्थलक्षणयोपचारेण चोपपत्तौ शक्त्यकल्पनात् । नित्यशब्दाभिप्रायेण गौणत्वव्युत्पादनेन मुख्यार्थपरिचयाच्च । तेन नित्यत्वानित्यत्वभिन्नत्वाभिन्नत्व-कार्यत्वाकार्यत्वाश्रितत्वानाश्रितत्व-सत्त्वासत्त्वादयः तद्विशेषाः, घटत्वाघटत्वादयस्तद्विशेषाः सन्निरुद्धासन्निरुद्धादयः सर्वे विकल्पाः संगृह्यन्ते ।

तदियमेवं प्रवर्तते—शब्दोऽनित्यः कृतकत्वादिति प्रयोगेऽनित्यत्वयोगादनित्यशब्दः तदनित्यशब्दः तदनित्यत्वमनित्यं नित्यं वा ? नाद्यः, तन्नाशाच्छब्दस्य नित्यतापत्तेः । नान्त्यः, धर्मनित्यतया धर्मिणोऽपि शब्दस्य नित्यतापत्तेः । धर्मिनिरपेक्षस्यानवस्थानात् । नित्यत्वमपि नित्यमनित्यं वा ? आद्ये, नित्यान्तरयोगात्तत एव वा । प्रथमेऽनुगतधीहेतु[अ]नुगतधर्मातिक्रमे प्रथममपि नित्यत्वं न स्यात् । नेतरः, स्वाश्रयापत्तेः । नान्त्यः, उक्तोत्तरत्वात् ।

एवञ्चात्रैव साध्ये प्रकारान्तरेण प्रत्यवस्थानमनित्यत्वं यदि नित्यं, कथमतदाकारमन्यतमाकारतामासञ्जयेत् । नीलीपुष्पस्य युक्ताकारतापत्तेः, अतिप्रसङ्गाच्च ।

---

१. तन्मात्रग्रहणात् ।

तदाकारघटयोगात् घटस्यापि घटाकारतापत्तेः । अपि च नित्यत्वधर्मयोगोऽनित्यत्वाकारज्ञानप्रयोजकोऽनित्यत्वधर्ममेकत्वम्वा ? आद्येऽनवस्था; अन्त्ये तादात्म्यधर्मधर्मिभावानुपपत्तिः । तत्स्वाभाव्यव्यतिरिक्तव्यवस्थितानां घटादीनां नित्यत्वापत्तिश्च ।

किञ्चानित्यत्वं न प्रमाणमात्रात्, अत्यापत्तेः? । नापि तत्प्रमाणात्, स्वाश्रयापत्तेः । यतश्च प्रमाणादनित्यत्वमभ्युपेयम्, स्वविषये स्वाविषये वा ? नाद्यः, स्वाश्रयत्वात् । नान्त्यः, विरोधात् । एवं वैरूप्यात्तत्रैव प्रयोगे प्रत्यवस्थानं यथाऽनित्यत्वं शब्दाभिन्नम[म्]भिन्नं वा ? आद्ये, धर्मधर्मिभावानुपपत्तिः, भिन्नत्वं च भेदान्तरयोगात्, अभावतो वा ? आद्येऽनवस्था, अन्यस्यान्यधर्मत्वेऽतिप्रसङ्गो वा । अन्यत्रात्माश्रयः । द्वितीये पक्षसाध्यान्यतराभावः, पक्षाभावादाश्रयासिद्धिः, साध्याभावाद्बाधः, साध्यविकलश्च घटादिर्दृष्टान्तः । तथा साध्यसाधने[ऽ]भिन्ने न वा, ० तरामसाध्याविशेषः । आद्ये[ऽ]भेदो न स्वरूपं, सहप्रयोगानुपपत्तेः । अभिन्ने चाभेदप्रमानुपपत्तेः, दूरात् सामान्यमात्रदर्शने संशयानुपपत्तेश्च । नान्योन्याभावः तस्य भिन्नत्वप्रतिसंहितप्रतियोगिनिरूप्यत्वात् । नापि वैधर्म्यम्, अनवस्थापत्तेः । तथा शब्दः सत्योऽसत्यो वा ? सत्यश्चेत्, सत्यतायोगात्, अन्यथा वा । चरमे विरोधः, आद्ये सत्यता । सामान्यमन्यद्वा ? नाद्यः, सामान्यादेरसत्यतापत्तेः । अन्यश्चेत्तदपि सत्यमसत्यं वा ? सत्यञ्चेद्भिन्नं सत्यतायोगादभिन्नं तद्योगाद्वा । भेदेऽनवस्था, अभेदे, आत्मनि वृत्तिविरोधः । असत्यत्वे त्वाश्रयासिद्धिः । तथा शब्दोऽनित्यता चेति एकं तत्त्वमनेकं वा ? आद्ये, धर्मधर्मिणोरेकशेषे सिद्धसाधनाश्रयासिद्ध्योरन्यतरापातः । अन्त्ये, किमनेकता प्रत्येकं संबद्ध्यते मिलिते वा ? आद्ये, प्रत्येकमनेकत्वापत्तिः, द्वितीये, मिलिताभ्यां भिन्नमभिन्नं वा । चरमे सैव प्रत्येकमनेकतापत्तिः । प्रथमे मिलितमनेकं स्यात्, न तु धर्मिसाध्ये । तथा शब्दत्वं पक्षस्य विशेषणमुपलक्षणं वा ? आद्ये, शब्दत्वमनित्यं स्यात्, तद्वैशिष्ट्येनानित्यता संबन्धस्य विशेषणतायामादरणीयत्वात् । द्वितीये, सिद्धसाधनम्, वस्तुमात्रस्य धर्मित्वात् । तथा त्वत् साधनेन सदसद्वा जन्यते, सच्चेत्कारणवैयर्थ्यम्, असच्चेत् स्वरूपमसत्त्वं धर्मो वा स्वरूपं चेद्व्याघातः । असतः स्वरूपाभावात् । अन्त्ये, भिन्नकालेनासत्त्वेन घटस्य संबन्धविरोधः । तथा साधनं सदसद्वा ? सच्चेत्, सत्तायोगादन्यथा वा । अन्यथा चेत् व्याघातः; आद्ये सत्ता सती न वा ? न चेत्, सत्त्यायोगानुपपत्तिः । सती चेत्, सत्तायोगादनवस्था; तदयोगे सत्त्वानुपपत्तिः । तथा नेदं जगत् स्थिरम्, अर्थक्रियाजनकस्य स्वाभाविकत्वे क्षेपानुपपत्तिः; औपाधिकत्वे चोपाधिसंबन्धस्य स्वाभाविकत्वे तथैव दोषात् । उपाधिपरम्परानुसरणेऽनवस्था । नापि क्षणिकं, क्षणिकत्वस्यैवाक्षणिकत्वात् । क्षणिकत्वे च तन्निवृत्तौ विश्वस्याक्षणिकत्वापत्तेः । एवमनित्यत्वं कार्यमकार्यं वा ? नाद्यः, शब्दात् पूर्वं सहवोत्पत्तौ धर्मधर्मिभावानुपपत्तेः । पश्चादुत्पत्तौ पूर्वं शब्दनित्यत्वे[ऽ]विरोधात् । अकार्यत्वे तु विरोधात्, अकार्ये तु धर्मिणोऽप्यकार्यत्वप्रसङ्गः । तथा घट इत्युक्ते घटत्वयोगात्, घटं तत् किं नित्यमनित्यं वा ? आद्ये, घटोऽपि नित्यः, नित्यपरममहत्वधर्मिव्योमवत् । द्वितीये जातित्वाभावः ।

एवं पक्षस्य साध्यधर्मवत्वेनानिश्चितत्वमकार्यं कार्यं वा ? आद्ये, विनाशाभावात्, तन्निवृत्त्यर्थं व्यर्थमनुमानम्। अन्त्ये, तस्य प्रागसत्वात् निश्चितत्वे सिद्धसाधनम्। तथा साधनेन साध्यज्ञानं प्रतिवाद्याश्रितं जन्यतेऽनाश्रितं वा ? आद्ये, आश्रितत्वमप्याश्रितमनाश्रितम्वेत्वनवस्था । अन्त्ये चाप्रतिपादकत्वादनुमानवैयर्थ्यमित्यादि शुष्कतर्कमतानुसाराद्गूहनीयम्। बौद्धचार्वाकवेदान्तिनाञ्चात्रैव निर्भरः। तदस्या धर्मधर्मिभावोद्धारम्, स एव दोषः। प्रतिकूलतर्कमारोप्यम्। तदाभासाचेयमापाततः यथा सम्भवं बाधादिदेशनाभासा च ।५।१।३५।

अत्र प्रत्युत्तरसूत्रम्—

**प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः ।५।१।३६।**

त्वयाऽनित्यतया प्रतिषेध्ये शब्दे नित्यं सर्वदाऽनित्यभावान्नित्यः शब्द इति यो प्रतिषेधः तस्याभावः[तस्मात्]। नह्यनित्यत्वं तत्र सर्वदा नित्यत्वञ्चेति सम्भवति।

अथ सर्वदैवानित्यत्वं तत् सिद्धं, ततो हेत्वसिद्धिरित्यक्षरार्थः। तात्पर्यन्तु स्वोक्तिव्यापकतया यथायथं स्वव्याघातः। अनित्यत्वञ्च नानित्यं गुणादावनित्यधर्मो न स्यात्, एतदभावापत्तेः। न च धर्मनित्यत्वे धर्मिणो नित्यत्वं तयोर्भेदात्। काल्पनिकेऽपि धर्मधर्मिभावे तथात्वोपगमात्। तत्रैव तद्विशिष्टव्यवहाराभावात्। न चातिप्रसङ्गः, यथादर्शनं स्वभावव्यवस्थापनात्। सम्विदेव भगवती वस्तूपगमे[नः]शरणमिति न्यायात्। जातिमति घटादौ तद्व्यभिचाराच्च[1]। अन्यथा सत्त्वादिनित्यत्वे धर्मिणां सत्त्वादन्निरीहं[2] जगज्जायेतेति व्याघातः। तदिदं युक्ताङ्गहीनत्वम्, नायमेतस्य धर्मो नित्यत्वादिति व्याप्त्यसिद्धेः।

यत्त्वन्याकारान्न तदाकाराधीर्जायत इति, तन्न, धर्म एव हि धर्मिणस्तदाकारता, न तु तदापाद्यमर्थान्तरम्। तदिदमयुक्ताङ्गाधिक्यम्, तदाकारतापादकमयुक्तमङ्गीकृत्यापादनात्, स्वोक्तिव्यापनाद्व्याघातश्च । इदमसाधकमित्यत्रासाधकत्वयोगादसाधकम् । तत्किं तदाकारमन्याकारं, भिन्नमभिन्नमित्यादिविकल्पस्य दुर्वारत्वात्। एवमन्यत्वानन्यत्वादिहेतौ घटा[दि]दृष्टान्ते[3] द्रष्टव्यम्। धर्मधर्मिभावानभ्युपगमे तवाप्यसाधकतानुमानं न स्यात्। एवं सर्वत्र पूर्वोक्तव्याघातः। अनित्यत्वं नानित्यम्, अतोऽनित्यत्वान्तरानुसरणे नानवस्था। तदाकारता च तद्धर्मता, सा च भेदनियता, प्रमेयत्वादावपि प्रमादिव्यक्त्यवच्छेद[क]स्य सत्त्वात्। क्वचिदनन्यगत्या

---

१. तदिति ख पुस्तके नास्ति।

२. सत्वान्निरीहं ख।

३. दृष्टान्तेव ख।

प्रमेयत्वादावभेदे[पि]धर्मधर्मिभाव इत्यन्ये। कार्यमकार्यमित्यादौ च व्याघातः स्फुट इति सूत्रार्थः। सर्वत्रापादने मिथो विरोधमूलशैथिल्यविपर्ययापर्यवसानानुकूलत्वेष्टप्रसञ्जनान्यतरतर्कदोषा यथासम्भवमूहनीयाः।५।१।३६।

[कार्यसमप्रकरणम्]

पूर्व[र्वा]परजात्योर्विकल्पसमुत्थत्वेनैककार्यत्वात् सङ्गतिः। वस्तुतो वक्तव्यजात्यन्तराभावे वक्तुश्च वक्तव्यतैव सङ्गतिः। सूत्रम्—

**प्रयत्नकार्यानेकत्वात्कार्यसमः।५।१।३७।**

ननु कथमत्र प्रत्यवस्थानम्। न तावच्छब्दोऽनित्यः प्रयत्नकार्यत्वादित्युक्ते किं प्रयत्नान्तरमुत्पत्तिर्विवक्षिताऽऽहोऽभिव्यक्तिरेव, अर्थान्तरत्वात्। अथात्राद्येऽसिद्धिः, अन्त्ये[ऽ]नैकान्तिकत्वमित्युच्यते। तन्न, तदा सदुत्तरत्वेन जातित्वाभावात्।

अथ प्रकर्षनिकर्षवत्त्वादिना शब्दस्योत्पत्तेः साधनादसिद्धिरसिद्धेति प्रतिषेधासामर्थ्याज्जातित्वमिति चेन्न, एवंविधाया असिद्धेः छलसाधारण्येन जातित्वाप्रयोजकत्वात्। नव कम्बल[व]त्वादित्यत्रैकस्यैव कम्बलस्य सत्त्वादसिद्धिरसिद्धा। नूतनकम्बल[त्व]स्य सिद्धेरिति सुवचत्वात्। अन्वर्थतया[ऽ]रोप्य दूषणादसमर्थप्रसङ्गतया जातित्वमिति चेत्। न, तथापि कल्पितदूष्यदूषणतया छलत्वापत्तेः। न चारोपोऽपि विकल्पदूषणाभिधाने विवक्षितस्याप्यर्थस्य दूषणात्। न चेयं जातिः सर्वानुमानसाधारणी, उदाहरणविशेषपुरस्कारेण लक्षणात्। तथाऽन्यत्कार्यत्वं घटस्य मृद्दण्डादिपूर्वकत्वं, शब्दस्य चान्यत्ताल्वादिसंयोगविभागपूर्वकत्वमिति पक्षदृष्टान्तयोः कार्यत्वस्याननुगमात् कार्यसमायां प्रत्यवस्थानम्। यदाह[धर्म]कीर्तिः—

साध्येनाननुगमात्कार्यसामान्येनापि साधने।
सम्बन्धिभेदाद्भेदोक्ति दोषः कार्यसमो मतः॥इति॥ [प्रमाणवार्त्तिकम् १।१६।]

उभयत्र कार्यव्यपदेशस्तु नानार्थशब्दवत् शब्दमात्रानुगमात्। न च तन्मात्रानुमितिः पाण्डुद्रव्यादिवत्। यदाह—

वस्तुभेदे प्रसिद्धेऽपि शब्दसाम्यादभेदिनः।
न युक्तानुमितिः पाण्डुद्रव्यादिवद्धुताशने॥इति [प्रमाणवार्त्तिकम्।१।१४]

न चेयमुत्कर्षसमा, अविद्यमानधर्मोत्कर्षेणाप्रत्यवस्थानात्। नाप्यपकर्षसमा, व्यापकाभिमतव्यावृत्त्या व्याप्याभिमतव्यावृत्तेः प्रसञ्जनात् संबन्धिभेदमात्र एव तात्पर्यात्। नापि वर्ण्यसमा, साधनवैकल्यं परिहाय दृष्टान्तस्यापि तादृशरूपवद्धेतु-

मत्ततया ख्यापनीयत्वापादनस्य तत्त्वात्। न चेयं तथा, अननुगमापादनेनाव्याप्तिपरत्वात्। नाप्यवर्ण्यसमा, दृष्टान्तोपयुक्तरूपवद्धेतुमांश्चेत्, पक्षो न वर्ण्यः, तद्धीनश्चेत् सुतरामित्यख्यापनीयत्वापादनस्य तत्त्वात्। अत्र च संबन्धिभेदाधीनभेदमात्रपरत्वादित्युक्तम्।

दिग्नागोप्याह—

कार्यत्वान्यत्वलेशेन साध्यासिद्धि[नि]दर्शनम्।
तत्तत्संबन्धिनां भेदादसौ कार्यसमो मतः ॥इति [प्रमाणसमुच्चय ?]

तन्न। तथाहि—अत्र संबन्धिभेदमात्रापादनेऽर्थान्तरम्। तेन व्याप्त्यभावापादनञ्च सदुत्तरम्। एकपक्षमात्रवृत्तिकार्यत्वं न साधकम्, असाधारण्यात्। दृष्टान्तमात्रवृत्ति च तत्पक्षे स्वरूपासिद्धमुभयसाधारणम्। तन्नास्त्येवेत्यपि सदुत्तरम्।

अथ मृद्दण्डादिपूर्वकत्वं घटादौ कार्यत्वव्यापकं गृहीतं, तच्च पक्षात् व्यावृत्तम्, अतः कार्यत्वमपि शब्दे व्यावृत्तमिति स्वरूपासिद्धिरापाद्यते। तदापकर्षसमत्वं स्वचरितविरुद्धं चेदं लक्षणं दिग्नागस्य यदीश्वरानुमाने। तन्न। तरुगिरिसागरादीनामन्यत्, कार्यत्वमन्यत् प्रासादाट्टालकगोपुरादीनामिति हेतुभेदासाधारण्यमित्याह स्म।

**शिवादित्यमिश्रास्तु** प्रयत्नकार्यत्वानेकत्वादि[दी]त्यनेन दृष्टान्तानेकत्वमुक्तम्। तथा च साध्यत्वेनैव हेतुना दृष्टान्तान्तरेणानिष्टापादनं कार्यसमः। यथा यदि प्रयत्नान्तरदर्शनाच्छब्दस्यानित्यत्वं साध्यते, तत एवाभिव्यक्तिरपि किं न साध्यते। सापि प्रयत्नकार्या यत इति प्रसङ्गः। न चेदं सदुत्तरमेव, व्यभिचारानुद्भावनादित्याहुः।

तन्न। तस्योत्कर्षसमप्रपञ्चत्वात्। अन्ये तु पूर्वजातिबहिर्भूता जातिः कार्यसमा। सूत्रन्तु प्रयत्नकार्यस्य जातिरूपप्रत्यवस्थानस्य पूर्वजातिभिन्नस्यानेकत्वात् ना० [ना] प्रकारत्वात् प्रत्यवस्थानं कार्यसम इति योज्यम्। अतः पूर्वजातयन्यत्वमेव लक्षणमित्याहुः।

तन्न। तत्संग्राह्यानां जातीनामाकृतिगणरूपोपपत्तिसमायामेवान्तर्भावात्, भाष्यादिविरोधाच्च।

उच्यते। प्रयत्नस्य कार्यं कर्म विषयो हेयोपादेयतया व्यवहार इति यावत्। तस्यानेकत्वं पारमार्थिकत्वापारमार्थिकत्वभेदात्। तत्र द्वितीये विरोधः। आद्यस्य

चासिद्धिः, मानाभावात् । तच्च[1] प्रयत्नान्तरोपलब्ध्या साध्यम्, सा चानैकान्तिकीति प्रत्यवस्थानं कार्यसमः । न चैवं सौत्रकार्यपदमुख्यार्थत्यागो दोषाय, सर्वव्यापकार्थत्वात्[2] । अपकर्षसमावर्ण्यसमाभ्यां भेदार्थत्वाकृतेन वाद्युक्ते दोषमाशङ्क्यम् । तत्परिहाराय सोत्प्रेक्षितप्रमाणदूषणेन वाद्युक्तसाधनस्यासामर्थ्यप्रसञ्जनं कार्यसम इति लक्षणम् । प्रयत्नकार्यानेकत्वादिति हेतुप्रदर्शनमुत्प्रेक्षितहेतूत्थापनेन जात्युत्तरप्रदर्शनार्थम्, उदाहरणविशेषस्फोरणार्थञ्च । वाद्युक्तसाधनदूषणोद्धाराय सोत्प्रेक्षितहेतुदूषणेन प्रत्यवस्थानमात्रस्यैव समन्वतया[सामान्यतया]विशेषस्यानाकाङ्क्षितत्वेनान्वयबोधाविषयत्वात् । न च प्रमाणतयोपलभ्यास्ते[न्यस्ते]कार्यत्वे प्रमाणगवेषणोपक्रमत्वात् प्रसङ्गसमैवेयम्; तस्यानवस्थापर्यवसायित्वात् । अत्र तु प्रमाणगवेषणमुपक्रम्य स्वयमेव किञ्चित्प्रमाणमाशङ्क्य तद्दूषणेन पर्यवसानात् ।

किञ्च, प्रसङ्गसमायां प्रमाणे किं प्रमाणं, तत्रापि किमिति प्रमाणजिज्ञासापरम्परामात्रम् । अत्र तु प्रमाणविषयप्रमाणविशेषदूषणाभिधानम् । तथापि प्रकर्षनिकर्षवत्त्वादिना प्रमाणेन शब्दगतां कार्यतां मन्वानस्य प्रयत्नानन्तरोपलब्ध्या कार्यत्वासिद्धावभिसन्धिमारोप्य दूषणं छलमेव स्यादिति चेन्न । अर्थविकल्पोपपत्त्या वचनविघाताभावात् । न चैवं सदुत्तरत्वमेवास्य, स्वयमुत्थापितस्य हेतोः दूषणेनानुत्थापितस्य पराभिप्रेतस्या[स्यो]कर्षत्त्वादे दूषयितुमशक्यत्वात् ।

इयञ्च न केवलं हेतुसिद्ध्यर्थोत्प्रेक्षितप्रमाणदूषणोपसंहारेण प्रवर्तते । किन्तु पक्षदृष्टान्तसिद्ध्यर्थोत्प्रेक्षितप्रमाणदूषणेनापि । 'तदयं सूत्रार्थनिष्कर्षः—पक्षहेतुदृष्टान्तेषु मध्ये यस्य कस्यचिदङ्गस्यासिद्धत्वमुद्भाव्य तत्साधकतया किञ्चित्स्वयमुत्प्रेक्ष्य तद्दूषणेन तत्साधकत्वोपसंहारः कार्यसमेति । तदत्र व्यवहर्तव्यद्वैतमेव द्वारं, व्यवहर्तव्यपारमार्थिकत्वमेव दूष्यम् । मूलानुमानस्याङ्गासिद्धिरारोप्या, तदाभासा चेयम् ।५।१।३७।

अत्र प्रत्युत्तरसूत्रम्—

**कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ।५।१।३८।**

कार्यान्यत्वेऽभिव्यक्तिलक्षणे प्रयत्नस्याहेतुत्वं कुतः ? यत्रानुपलब्धिकारणस्यावरणस्या[ा]देरुपपत्तिर्भवति तत्र तथा यतः । न च शब्दस्यानुपलब्धिकारणं किञ्चिदुपलभ्यते, येनाभिव्यक्तौ शब्दस्य प्रयत्नाहेतुत्वं कल्प्येत । अन्यथा घटाद्युत्पत्तावपि तथात्वापत्तिरिति नासिद्धो हेतुरित्यर्थः ।

---

१. कर्म च
२. कार्यपदस्येति शेषः ।

यद्यपि यत्नान्न साक्षाच्छब्द उत्पद्यते, तथापि पारम्पर्येण स हेतुः । तथा हि प्रयत्नाच्छरीरावयवक्रिया तया कोव्य[?]वायुनोदनं ततस्तस्य क्रिया तया ताल्वादिसंयोगविभागौ, ततः शब्दोत्पत्तिः । अथासिद्धो न गमक इति हेतुसाधनायेदं प्रमाणं तवाभिमतम्, इदञ्च दुष्टमित्येतद् गौरवादेव तव दुष्टो हेतुरित्यभिसन्धिः । तत्रापीदमुत्तरम्—कार्यस्य हेतुतयोत्प्रेक्षितस्य हेतोः प्रकृतादन्यत्वेऽन्योन्यास[स्य]प्रयत्नस्याहेतुत्वं प्रकृतदूषणे कुतः, अनुपलब्धिकारणोपपत्तेः । प्रकृतविषयतयाऽनुपलब्धिरेव साधनं यतः, अन्यदोषाच्चान्यदुष्टत्वोपगमे तवापि व्याघात इत्यर्थः ।

एतेनाविषयवृत्तित्वं दुष्टत्वमूलं द्विधा दर्शितम्, विषयावृत्तित्वादविषयवृत्तित्वाच्च । अन्यदूषणस्यान्याविषयत्वात् । जातिवाद्युत्प्रेक्षितस्य दूषणत्वस्थितौ वादिनोऽनभ्युपगमेन हीनत्वाभावाच्च । तस्मादुक्ते दूषणं वाच्यम् । तच्चेत्तद्विषयमेव स्यात्, अन्यथा तवापि व्याघात इति ।

ननु जातिविभागोऽनुपपन्नः । चतुर्विंशतेरन्यासां जातीनां सम्भावात्[1] । तद्यथा विकल्पसमाव्यतिरेकेणाविकलसमा । तथा हि—जीवच्छरीरं न निरात्मकं प्राणादिमत्त्वादिति केवलव्यतिरेकेऽपि प्रयुक्ते, जातिवाद्याह—प्राणादिमत्त्वात्तद्विरहलक्षणा वैधर्म्यव्यवस्थितावपि जीवच्छरीरघटयो र्यथा न सदसत्त्वे विकल्पः, तथा सात्मकनैरात्म्यविकल्पोऽपि न स्यात् ।

सेयम्[अ]विकल्पसमा । एवं साध्यसमा विपर्ययेणासाध्यसमा । यथा साध्यधर्मदृष्टान्तधर्मयोः तुल्यत्वे[ऽ]दृष्टान्तवत् साध्यस्यापि पञ्चावयवप्रयोगे असाध्यत्वप्रसङ्गः । तथा प्रसङ्गसमा विपर्ययेणाप्रसङ्गसमा । यथा प्रमाणेष्वनवस्थाभयात् प्रमाणं विना[अ]सिद्धिः, एव[म्]प्रमेयेष्वप्यस्तीति । एवं प्रत्यक्षादिसमाः, यथा प्रत्यक्षाद्यन्तराद्वैपरीत्यमेव कुतो न भवति । एवमप्राप्तसमा । यथाऽग्निधूमयोः व्याप्ति र्दृश्ययोरदृश्ययोः, दृश्यादृश्यसाधारण्ययोर्वेति[2] विकल्पे दृश्यव्याप्तौ कारीषो न स्यात्, तस्यानभिव्यक्तत्वात् । अदृश्यव्याप्तौ ताल्वादिर्न सिद्ध्येत । व्यतिरेकाग्रहश्च । साधारणव्याप्तौ च[नै]कापि सिद्ध्येत । तथा प्रतिबन्दिसमा । बुद्धिनित्यत्वे शरीरार्थयोगात् । प्रयत्ननित्यत्वे बुद्ध्यनुपयोगः स्यात्, तथापि शङ्कापिशाचीसमा—"यथेदमत्र न साधनम्, अन्यदेवाऽत्र साधनं स्यात्" इत्यादिः । तथा विपरीतप्रसक्तिसमा—यथेदं भूतलमघटमिति साध्येनाप्रसक्तो घटः[न]निषिध्यते, किन्तु प्रसक्तः । प्रसक्तिश्च ज्ञानं, तथा चानुपलब्धि[ब्धे]र्न्निषे[ध]कं मानं नास्तीति । एवमनुपकारसमा, यथा कार्यकारणभावादावनुपकारनियतत्वेनैवात्रप्यन्यथा च व्यवस्था । एवं सिद्धसाधनसमा । यथा वह्निमत्पूर्वकत्वे साध्ये मीमांसकानां सर्वबीजकर्मभिः सिद्धसाधनापादनम् । एवं संशयसमा, विपर्ययेणासंशयसमा, यथा यदि संशयः स्वात्मनि

१. सम्भवात् ।
२. साधारण्यसाधारणी ।

ताद्रूप्येण वर्तते तदा स्वयं सन्दिग्धः कथं धर्मिणः पक्षतामापादयेत् । अथ न वर्तते संशयः, न स्यादेव स्वात्मनि ताद्रूप्येण वृत्तेः । तथोपपत्तिसमा, विपर्ययेणानुपपत्तिसमा, यथा मत्पक्षवत् त्वत्पक्षेऽपि किञ्चिद्दूषणं स्यादिति । एवम् विशेषसमा विपर्ययेण विशेषसमा, यथा केवलव्यतिरेकिणि प्रयुक्ते यदि जीवच्छरीरे प्राणादिमत्त्वविशेषान्नैवास्य निवृत्तिलक्षणो विशेषः । कुतश्चिद्विशेषाद्विश्वस्यैव विशेषः स्यात् । तथा समुच्चयसमा, यथाः पर्वतोऽग्निमानिति प्रयुक्ते यदि पर्वत एवाग्निमानिति साध्यते तदा महानसादीनामपि प्रतिज्ञैकदेशतया दृष्टान्ताभाव इति ।

तत्र केचिदाहुः, विभागस्य न्यूनसंख्याव्यवच्छेदकत्वेनैवमादीनां जातीनां पार्थक्येऽप्यदोषः । न चैवं प्रमाणादिविभागेऽप्यतिप्रसङ्गः । यत्र हि न प्रमाणमुपलब्धं तत्र विभागस्याधिकव्यवच्छेदार्थतां विनाऽप्याधिक्यनिषेधोऽन्वर्थः । इह तु अधिकोपलम्भान्न तथेति । तन्न, सामान्यतो ज्ञातस्य तद्विशेषजिज्ञासायां विशेषवचनमितरव्यवच्छेदफलमित्यस्य न्यायलभ्यत्वात् । अन्यथा न्यूनसंख्याव्यवच्छेदकत्वस्यापि अलाभात् । न्यूनसंख्याव्यवच्छेदार्थकत्वे विभागवैयर्थ्याच्च । परस्यासङ्कीर्णाधिकलक्षणादेव तत्सिद्धेः । न्यूनत्वे वस्तुनोऽधिक[त्वे]लक्षणानुपपत्तेः, अधिकसंख्याव्यवच्छेदस्य च ततोऽसम्भवात् । तर्ह्यधिकसम्भवे न्यूनलक्षणं विरुद्ध्यते । तस्मादधिकसंख्याव्यवच्छेदाय प्रवृत्तो विभागो न्यूनसंख्यामपि व्यवच्छिनत्ति, न तु तद्व्यवच्छेद एवास्य प्रयोजनम् तस्मादेवं वाच्यम्—यदि सत्त्वस्य नैरात्म्यव्यभिचारं दृष्ट्वा प्राणादिमत्त्वेऽपि तमापादयेत्तर्हि, अविकल्पसमापि विकल्पसमैव । अन्यव्यभिचारसञ्चारमात्रशरीरत्वात्तस्याः ।

अथ सात्मकत्वनिरात्मकत्वविकल्पं खण्डयता जीवच्छरीरस्यापि सत्त्वेन घटवन्नैरात्म्यमापद्यते, तदा प्रतिरोधपक्षे साधर्म्यसमा बाधपक्षे प्रकरणसमा । अथ घटस्य विपक्षस्यापि सत्त्वेन सपक्षत्वमापादयेत्; तर्हि अनित्यसमेति । अथ सत्त्वासत्त्वविकल्पभङ्गनैरात्म्यविकल्पभङ्गमात्रमापादयेत्तदा कथं विकल्पसमादावन्तर्भावः । न च विकल्पभङ्गे द्वयोः सात्मकत्वं नैरात्म्यं वा स्यात्, तथाचोत्कर्षसमा एवेति वाच्यम् । सामान्यापादने विशेषापादनस्यानावश्यकत्वादिति मतं, तर्ह्याकृतिगणत्वेनोपपत्तिसमायामेवान्तर्भावो वाच्यः । असाध्यसमा तु नास्त्येव जातिः; तत्प्रयोगबीजस्य हेत्वाभासारोपस्याभावात् ।

अथैतत्प्रयोगवर्तित्वेन सह दृष्टान्तदुष्टमेतत्प्रयोगसाध्यत्वम्, अतस्तेनैव बीजेन दृष्टान्तवत् प्रयोगासाध्यत्वं प्रसञ्जयेत्तदोत्कर्षसमायामेवान्तर्भावः । उपन्यस्तप्रमाणोऽन्यप्रमाणसत्त्वे साहचर्यस्यापि बीजत्वे तत्रैवान्तर्भावः । सिद्धत्वमात्रसाहचर्यस्यापि बीजत्वे तथा दृष्टान्तगतसिषाधयिषितधर्मासाधकत्वमेव बीजं स्यात् । प्रकृतासाधकोऽयं हेतुः दृष्टान्ते तज्जातीयव्यक्त्यसाधकत्वादित्यस्यासाध्यसमजातिवाक्यार्थत्वादिति चेन्न । एवमप्युपपत्तिसमेऽन्तर्भावात् । यथाकथञ्चिद्धेतुप्रयोगे न प्रकृतहेत्वसाधकत्वापादनस्य सकलजातिसाधारणत्वेऽपि न तत्रैवान्तर्भावस्योचितत्वात् ।

एवम[प्र]सङ्गसमापि तत्रैवान्तर्भूता, न त्वनुपलब्धिसमायाम् । तथा हि प्रमाणं यदि स्वात्मनि प्रमाणं तदा प्रमाणविषयतया प्रमेयवन्न प्रमाणम् । अथ स्वात्मनि न प्रमाणं तदा कथं तत्प्रमाणम् । यथा वा घटः स्वात्मनि घटरूपवान्न वा ? आद्ये आत्माश्रयः, अन्त्ये नासौ घटः । न हि स्वात्मन्यघट इति प्रत्यवस्थानं स्यात्तदाऽनुपलब्धिसमायामन्तर्भावः स्यात् । न चात्रैव प्रत्यवस्थानं, किन्त्वनवस्थाभयेन प्रमाणप्रमायाः प्रमाणाजन्यत्वाद्व्यभिचारितया प्रमेयप्रमां प्रत्यपि न प्रमाणं जनकम् । तथा च प्रमाणस्य प्रमित्यजनकत्वापादनमप्रसङ्गसमः, स्वव्याघातकतया जातित्वात्, स्वयमुपन्यस्तप्रमाणस्यापि प्रमित्यजनकत्वात् । उक्तजातिभिन्नजातित्वस्योपपत्तिसमत्वात्तत्रान्तर्भावो युज्यते । प्रत्यक्षसमादयस्तु प्रतिप्रमाण[म्]प्रत्यवस्थानरूपतया साधर्म्य वैधर्म्यप्रकरणसमास्वन्तर्भवति । बाधप्रतिरोधोपक्रमान्निर्वाहकत्वमात्रे तु केवलनिरनुयोज्यानुयोगे, अव्याप्तिसमा तु छलमेव । सामान्यं विवक्षितं तिरस्कृत्याविवक्षितविशेषपुरस्कारेण प्रत्यवस्थानात्, तर्हि चैकत्वादिना विशिष्य व्याप्तिर्येन नियता तत्सिद्धिः स्यात् । व्यतिरेकग्रहोपायस्तु चतुर्थे वर्णितः । प्रतिवन्दिसमा तु मतानुज्ञा, नित्यप्रयत्नसिद्धौ तद्वत्पादोपयोगिनी बुद्धिः न सिद्ध्येदितीष्टस्ये[स्यै]वापादनात् । एवं शङ्कापिशाचीसमाप्युपपत्तिसमायामन्तर्भविष्णुः । विपरीतप्रसक्तिसमा तु प्राप्तिसमाप्रभेदः, निषेधस्यापि तन्निषेध्यतया साध्यत्वात्, साध्यं प्राप्य वाऽप्राप्यवेति विकल्पोपक्रमात् । अनुपकारसमापि विषयिधर्मापेक्षायामुपलब्धिसमाप्रभेदः । उपरञ्जकधर्मापेक्षया तु नित्यसमाविशेषः । सिद्धसाधनसमा वाक्छलम् । अदृष्टप्रागभावस्यापि[1] अप्रागभावाप्रतियोगिवद् व्याप्तिमज्जन्यत्वस्य साध्यतया पुरस्कृतस्य तिरस्कारेण सामान्यमादाय प्रत्यवस्थानात् । असंशयसमाप्यनुपलब्धिसमाप्रभेदः; स्वात्मनि ताद्रूप्येण वृत्त्यवृत्तिविकल्पोपक्रमात् । अनुपपत्तिसमा तु शङ्कापिशाचीरूपत्वेनोपपत्तिसमान्तर्भूता । विशेषसमा च मतानुज्ञाप्रभेदः, इष्टापादनरूपत्वात् । समुच्चयसमा तु तद्वत्तामात्रेण समुच्चयाऽभ्युपगमेऽपि तस्य साध्यतया समुच्चीयमानत्वमारोप्य प्रवृत्ते र्वाक्छलम् । एवमन्यदप्युक्तिभेदात् जातिभेदानन्त्यम् । तत्तज्जातिलक्षणानुसन्धानात् तत्र तत्रान्तर्भावेन प्रतिविधेयमिति ।५।१।३८।

[षट्पक्षीरूपकथाभासप्रकरणम्]

एवं गोत्वाद्गोसिद्धिवत्तत्सिद्धि[५।१।३।]रित्यादि प्रत्युत्तरसूत्रप्रणयनात् । परेण जातौ प्रयुक्तायां सदुत्तरेणैवोद्धारः कर्तव्यः । तथा च कथाच्छलं व्यवतिष्ठते, अन्यथा च तन्नेति प्रदर्शनार्थं कथाभासप्रकरणम् । असदुत्तरनिरूप्यत्वात् सङ्गतिः ।

तत्र षट्पक्षीरूपकथाभासावतारणार्थं सूत्रम्—

**प्रतिषेधेऽपि समानो दोषः ।५।१।३९।**

---

१. प्रागभावव्याप्यस्यापि ख

वाद्युक्तो हेतुरसिद्धः, तत्सिद्धिहेतोः प्रयत्नानन्तरोपलब्धेरनैकान्तिकत्वादिति योऽयं दोषः, स प्रतिषेधेऽपि नित्यत्वसाधके त्वत्पक्षे समानः तुल्यः। शब्दोन्नयने तुल्यः, प्रयत्नव्यङ्ग्यत्वादित्यत्रापि हेतुरसिद्धः।

अथ प्रयत्ना[न]न्तरोपलब्ध्या तत्साध्यते सानैकान्तिकी, उत्पत्तेरपि सम्भवादित्यभिधाय कार्यसमा सैव[1] जातिमाह। नन्वेवं स्वात्मव्याघातकत्वलक्षणजात्युद्भावनं सदुत्तरमेव स्यात्, न स्यात्, साम्यापादनाभिप्रायमात्रप्रवृत्तत्वेन तदभिप्रायेणाप्रवृत्तेः। द्वितीयवादिवदयमपि जातिमेवाह, यतः तस्यास्तु जातेः दैवाज्जातिरेवाधिकरणमित्येतत्। अथवा प्रतिषेधेऽपि प्रतिषेधवप्यनैकत्वादित्यत्र[2] समानोऽनैकान्तिकलक्षणो दोषः। न हि सोऽप्यैकान्तिकः। एवं हि स तादृशो भवेद्यदि सर्वमेव प्रतिषेधेन वा किमपि, न चैवं स्वसत्ताया अनिषेधात्। स्थापनानिषेधकत्वानुपपत्तिप्रसङ्गाच्चेति शब्दसाम्येन वाक्छलमाह। न च वादिनोपन्यस्त[म्]प्रतिवादिनाऽन्यत्र सञ्चाराच्छलम्। न चात्रैव वादिना स्वयमेवानैकान्तिकत्वाभिधानमिति वाच्यम्। वाद्युक्तदोषस्यैव तत्पक्षे सञ्चारात्। यद्वा तवापि पक्षे समानो दोष इति दोषवत्साम्यार्थं कञ्चिद्दोषमाहेति।

प्रकरणार्थस्तु वादिप्रतिवाद्युभयासज्जत्वप्रतिपत्तिफलकथात्वम्। तच्च षट्पक्षीबहिश्चतुःपञ्चपक्षीष्वप्यस्तीति तासामपि प्रकरणान्तर्भावः। षट्त्वकीर्तनं तु सम्भवप्रदर्शनार्थं, सप्तपक्ष्यादिवारणार्थञ्च।५।१।३८।

कार्यसमायामेव नैवं प्रत्यवस्थानं, किन्तु जात्यन्तरेणापि प्रत्यवस्थाने षट्पक्षी भवत्येवेत्याह—

**सर्वत्रैवम्।५।१।४०।**

तथा हि शब्दोऽनित्यः, कार्यत्वात्, ऐन्द्रियकत्वात्, घटत्वादित्युक्ते, सदसत्प्रयोगे तद्वदाकाशसाधर्म्यादस्या[का]शवन्नित्यः किन्न स्यादिति साधर्म्यसमः। अस्य[अथ]शमा[सदा]काशं नित्यं परममहद्दृष्टं, अतः शब्देनापि नित्येन सता परममहता भाव्यमित्युत्कर्षसमः। ननु यथाऽकाशदृष्टान्तेन परममहत्त्वं शब्दस्योच्यते, तथा रूपदृष्टान्तेन तद्रहितत्वमेव किं न स्यादिति प्रतिदृष्टान्तसमः। एवं तर्हि यथा निःस्पर्शमुभयथा किञ्चिदश्रावणं, रूपादि, किञ्चिच्छ्रावणं शब्दादि तथा किञ्चिन्नित्यं भविष्यति, गगनादि, किंचिदनित्यं शब्दादीति विकल्पसमः। ननु तथापि कार्यत्वमैन्द्रियकत्वं साध्यमप्राप्य न साधयेदि[ति]प्रसङ्गादिति प्राप्य वक्तव्यम्। तथा चाविशेषात् किं कस्यसाधकं, साध्यं वेति प्राप्तिसम इति षटपक्षाः स्वयमूहनीया इति सूत्रार्थः।

---

१. तामेव ?

२. अनेकत्वात्

कश्चित्तृतीयपक्ष एव नेदृक् प्रत्यवस्थानं, किन्तु पक्षान्तरेऽपि, इति सूत्रार्थं इत्याह । तन्न, सजातीयासजातीया सदुत्तरसपिण्डनपरत्वस्यावश्यकतयाऽन्यलभ्यत्वात् । यद्यपीदं सूत्रं षट्पक्षीव्युत्पादनानन्तरमेवोचितं, अतिदेश्यसिद्ध्युपयोगित्वादतिदेशस्य । तथापि त्रिपक्षादिसूचनार्थमर्द्ध एवोक्तम् । षट्पक्षा इव त्रिचतुःपञ्चपक्षाणामप्युभयासुज्ञत्वप्रतिपत्तिफलकत्वात् ।५।१।४०।

चतुर्थं पक्षमाह—

**प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ।५।१।४१।**

**प्रतिषेधे** द्वितीयः पक्षः विप्रतिषेधस्तृतीयः पक्षः प्रत्युत्तरं, तस्मिन् प्रतिषेधदोषस्तुल्यः । सजातीयतया तथा कार्यसमे कार्यसम एव तन्नामकतया वा, यथानैकान्तिकशब्दसाम्येन च्छलम् । दोषरूपतयैव वा तुल्य इति पूर्ववदित्यर्थः ।५।१।४१।

पञ्चमं पक्षमाह—

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ।५।१।४२।**

**प्रतिषेधं** द्वितीयपक्षं **सदोषं** स्वीकृत्य तद्विप्रतिषेधे समप्रतिषेधे तृतीयपक्षतुल्यस्य दोषस्य प्रसङ्गस्त्वत्कृतोऽयं मतानुज्ञेति सूत्रार्थः ।

ननु पञ्चमपक्षस्य मतानुज्ञोद्भावनतया सदुत्तरत्वेन षट्पक्षीबहिर्भावः स्यात् । न च षष्ठेन पञ्चमस्य मतानुज्ञोद्भावनादसमीचीनत्वं । मतानुज्ञायां मतानुज्ञोद्भावनस्यापर्यनुयोज्यत्वात् । तस्मात् प्रतिषेधं तृतीयं पक्षं सदोषमभ्युपेत्य तस्य प्रतिषेधस्य विप्रतिषेधे चतुर्थे पक्षे समानो दोषप्रसङ्ग इति मतानुज्ञोद्भावनरूपः पञ्चमः पक्ष इति सूत्रार्थः । अनिष्टभ्रमेणेष्टापादनात् ।

मतानुज्ञाग्रहणन्तु द्वितीयोत्तरपक्षाणां तथात्वख्यापनेनासदुत्तरत्वख्यापनायेति केचित् ।

परोक्तं दोषमनुद्धृत्य समानदोषप्रसङ्गरूपस्य पञ्चमपक्षस्य मतानुज्ञात्वेनैव दुष्टत्वान्नैवम् । न च समानमपि, एतन्मतानुज्ञत्वस्योत्तरसूत्रेणैव प्रदर्शनात् । दुष्टत्वख्यापनं षट्पक्षीमध्यपातादेवेत्यन्ये ।५।१।४२।

षष्ठं पक्षमाह जातिवादी—

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाऽभ्युपगमात् समानो दोषः ।५।१।४३।**

स्वपक्षस्थापनावादिन आद्यः पक्षः, तल्लक्षणः द्वितीयपक्षः जात्युत्तरम्, स्वपक्षलक्षणीयत्वात्; तस्यापेक्षा उपेक्षाऽनुद्धारः, तदनन्तरमुपपत्तेः, प्रतिषेधेऽपि समानो दोष इत्यस्या उपसंहारे प्रतिपादनविषये यो दूषणरूपो हेतुर्मया निर्दिष्ट उक्तः। चतुर्थकक्षास्थेन तत्र दोषमनुक्त्वा त्वया पञ्च[म]कक्षास्थेन यो मतानुज्ञारूपो दोष उक्तः, स तवापि समानः। तवापि मतानुज्ञा कुतः ? परपक्षदोषाऽभ्युपगमात्। तृतीयकक्षायां चतुर्थकक्षास्थेन मया यो दोष उक्तः, त्वया तदुपगमादिति सूत्रार्थः।

ननु चतुःपक्ष्यादेः कथमवकाशः। तृतीयपक्ष एवोभयोरनुज्ञात्वनिर्णयात्। अन्यथा सप्तपक्ष्याद्यपि स्यात्। मृदुमध्यातिमात्रप्रज्ञत्वान्निष्ठुरहृदयत्वाद्वा सभ्याः नोभयोरनुज्ञामुद्भावयन्तीति चेन्न। सप्तपक्ष्याद्यवकाशापत्तेः। प्रज्ञाप्रकर्षवतां जयभङ्गावधारणानुपपत्तीनां तेषां सभ्यानां स्वव्यापारे निरपेक्षत्वाच्च।

तत्राचार्याः—अवसरापेक्षया चतुःपक्ष्याद्यवकाशः। तथा हि विजिगीषु कथायां वादिभ्यां परस्परमपेक्ष्य प्रकृतिविषयशक्त्यशक्तिव्यवस्थापकत्वेनोपपत्तेः साध्यः कथकानुद्भाव्यम्। मुख्यतः पर्यनुयोज्योपेक्षणं तत्सिद्ध्युपयोगि वा [ऽ] न्यन्निग्रहस्थानमुद्भाव्यम्। तच्च सत्साधनोपक्रमायां कथायां प्रथम-द्वितीय-पक्षयोरसम्भावितमेव। तृतीयकक्षायां सम्भावितमपि नियुक्तैः सभ्यैरुद्भाव्यम्। नियोगकालातिपाते त्वनियुक्तैरेवेति नियमत्रये च नियोक्तारः प्रतिवादिवाद्यनुविधेयाः तत्र प्रतिवादिनियोगमपेक्ष्यमाणाः सभ्याश्चतुर्थं पक्षमनुमन्यन्ते। तदभावे तस्याप्यन्यथाभिधाने पर्यनुयोज्योपेक्षणमापतितमिति वादिनियोगमपेक्षमाणाः पञ्चमं, तस्याप्यन्यथाभिधायिनः पर्यनुयोज्योपेक्षण आपतितेऽनुविधेयप्रश्नावसरमुभयोः स्तम्भरूपमपेक्षमाणाः षष्ठमपि, तदभावे तु प्रश्नकालातिक्रमे सभ्यैरनियुक्तैरपि वचनविषयकलुषितश्रवणैः कथाभासत्वमुद्भावनीयम्। अन्यथा तेषामप्यवसरप्राप्तपर्यनुयोज्योपेक्षणानुद्भावने मूर्खत्वापत्तेः[1]। एतदुत्तरं सद्वादेऽपि नोपयुज्यते। प्राप्तोद्भावनावसरदोषोपेक्षणस्यासमाधेयत्वात्। कुतः, सत्त्वानां [सभ्यानां] प्रश्नापेक्षेति चेत्, कथायाः तदकर्तृकतया तेषामुत्थाप्य विवक्षितत्वात्। सा च प्रश्नेन, उभयोरप्रतिभया वा, कथाभासप्रबन्धेन वा।

तत्र प्रतिवादिप्रश्ने स्तम्भे च त्रिपक्षी, वादिप्रश्नस्तम्भे च चतुःपक्षी, अर्थविधेयप्रश्ने स्तम्भे च पक्ष[पञ्च]पक्षी, कथाभासप्रबन्धे च षट्पक्षी, वादे तु तृतीयकक्षायां वादिना निरनुयोज्यानुयोगोद्भावनं, चतुर्थकक्षायां प्रतिवादिना स्वयमेव स्वपक्षदोषोद्भावनम्, तत्त्वबुभुत्सुत्वात्। पञ्चमकक्षायामपि तथा, षष्ठस्य प्रतिभाप्रतीत्यर्थमवकाशः।

यदा तु नानयोः परस्परमसत्त्वरोद्भावनं, नापि स्वदोषं, स्वयमुद्भाव्य सदुत्तरोपादानं, नाप्यप्रतिभा, तदा सभ्यानामवसरः। यदि तु चतुर्थकक्षादा[व]सदुत्तरं

---

१. असुज्ञत्वापत्तेः ख

परित्यज्य सदुत्तरस्योपादानं, तदा दुष्टत्वपरिहान्या वादः प्रवर्तत एवेति । अत्राक्षिपति, कथायाः सभ्याकर्तृकतायां कथं न सभ्योद्भावितनिग्रहस्थानानां कथाबहिर्भावः, भवतु वा तेषां तत्राकर्तृकत्वं, तथापि कथोपक्रम एव भवद्भिरेतन्निर्णेयमिति सभ्याः नियुक्ताः, न तेषां तत्र पुनर्नियोगापेक्षा । अन्यसप्तमकक्षायामपि न तेवदेयु[न तावदेवम्] । अनियोगस्य तादवस्थ्यात् ।

किञ्च वादिना नियोगः कर्तव्यो, न तावत्परस्य निरनुयोज्यानुयोगे, तस्य स्वयमेवोद्भाव्यत्वात्, नापि पर्यनुयोज्योपेक्षणे । यथा हि स्वकौपीनविवरणभयेन वादिना पर्यनुयोज्योपेक्षणं नाभिधीयते, तथा तदर्थं नियोगोऽपि न कर्तव्यः ।

अपि चासत्साधनोपक्रमायां कथायां षट्पक्षाऽसंभवः स्यात् । न चेष्टापादनम् । **'सर्वत्रैवम्'** [५।१।४०।] इति सूत्रं व्याचक्षाणेन स्वयमेवासत[त्]साधनोपक्रम-कथायां षट्पक्षीप्रदर्शनादिति ।

अत्र **सम्प्रदायविदः**—मध्यस्थोऽपि न कथकः, कथासाध्यतत्त्वनिर्णयविजयफल-भागित्वाभावात् । कथकस्य तथात्वनियमात् । निष्पन्नफलनिवेदकेन मध्यस्थफल-वाक्येन सह कथकवाक्यैकवाक्यत्वाभावाच्च ।

अथ[अ]कथकत्वेऽपि तेषां नियमबन्धादेव निग्रहस्थानोद्भावकत्वम् । न च नियोगानपेक्षा कथोपक्रमे सभ्यानां तथा नियोगेऽपि कथकयोः प्रकृतविषयपरम्परा-सुज्ञत्वजिज्ञासायां तत्परिच्छेदकतयोपात्तानां तावदुद्भाव्यं, याव[दु]द्भावनं विना न तत्परिच्छेदकत्वव्याघातः । तच्च पर्यनुयोज्योपेक्षणं तदुद्भावनं, नान्तरीयकोद्भावनं च निग्रहस्थानान्तरम् । तत्र सत्साधनोपक्रमकथायामाद्यद्वितीयकक्षयोस्तदुद्भावनं न सम्भवत्येव । द्वितीयपक्षवादी यदि प्रतिवादिगतं निरनुयोज्यानुयोगमुद्भावयति तदा तस्य विजयः स्यात् । एवं मध्यस्थेन तदुद्भावने तेनैव तत्फलं खण्डितं स्यादिति मध्यस्थत्वव्याघातः । तत्राप्यसदुत्तरे चतुर्थकक्षा[यां]तु प्रतिवादी यदि वानोय ? [वादिनो]निरनुयोज्यानुयोगमुद्भावयति तदा तद्विजयः स्यात् । तदापि मध्यस्थस्य न तदुद्भावनावसरः कथा खण्डनापत्तेः ।

न चैवं द्वितीयतृतीयकक्षयोः वादिप्रतिवादिनोरसुज्ञत्वनिर्णयात् त्रिपक्ष्येवेति वाच्यम् । सत्स्थापनेन स्थापनायां द्वितीयकक्षावादस्याभासत्वव्यवस्थितौ तदसुज्ञा-भावे मध्यस्थस्यावसराभावात् । वादी तु पञ्चमपक्षस्थः परोद्भावनभयात् यदि स्वदोष-श्चोद्भावयेत्तदा परापेक्षया किञ्चिदुत्कृष्टः स्यादेव, तद्दोषस्य परेणानुद्भावनात् । मध्यस्थेनैव तदुद्भावने तैरेव तत्फलं खण्डितं स्यादिति तु पञ्चमं पक्षमपेक्ष्यन्ते । एवं प्रतिवादिनः किञ्चिदुत्कृष्टतार्थं षष्ठमपि परानुद्भावनार्थमेव वादिना मध्यस्थनियो-गोऽपि नानुपपन्नः । मध्यस्थेन तदुद्भावनस्य परापेक्षया किञ्चिदुत्कृष्टाधायकत्वात् । न चैवं किञ्चिदुत्कर्षावधारणाय पक्षान्तरापेक्षाऽपि स्यात्, कथाफलपर्यवसानापत्तेः ।

अथवाऽस्मज्जिज्ञासायां वादिवाक्या[र्थ]परमेवा[वाक्यं]मध्यस्थेन वक्तव्यमिति समयबन्धेन प्रवृत्तकथायां वादिप्रतिवाद्यनुविधेयानां जिज्ञासाया अप्रवृत्तौ षष्ठपक्षानन्तरं वाद्यादेरभिधाननिवृत्तौ मध्यस्थेन दोषोद्भावनात्, कथापर्यवसाने षड़ेव पक्षाः।

अथ षष्ठपक्षे मध्यस्थोऽप्यज्ञानाद्वादिवाक्यार्थपरत्वाद्वा दोषं नोद्भावयति तदा सप्तपक्षादावप्यविरोधः।

यद्वा षट्पक्षानन्तरं मध्यस्थेन न क्षन्तव्यमिति नियमबन्धे कृते तदा मध्यस्थेन दोषोद्भावने षट्पक्षाधिकपक्षासम्भवः। अन्यथा त्वधिकपक्षोऽपि। एवं वादेऽपि वादिद्वयसाध्यतत्त्वे निर्णयपरिच्छेदकतयोपात्तैः मध्यस्थैः षट् पक्षापेक्षणम्।

यद्यपि वादे मध्यस्थ एव नास्ति। वीतरागकथात्वात्। तत्सम्भवेऽपि वादिनोर्न परस्परमतत्वं निरूप्यते, किन्तु तत्त्वम्। न च तृतीयपक्षे सभ्येनोद्भावनेन विरोधः। तथापि दैवाघाते दैवाघातमध्यस्थे निबन्धनात्, तत्रापि व्यवस्थेति।५।१।४३।

इति महामहोपाध्यायश्रीगङ्गेश्वरात्मजोपाध्यायश्रीवर्धमानविरचिते
अन्वीक्षानयतत्त्वबोधे पञ्चमाध्यायस्य प्रथमाह्निकम्।

# पञ्चमोऽध्यायः

## द्वितीयमाह्निकम्

### [निग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम्]

अथ जातिविशेषलक्षणानन्तरं निग्रहस्थानविशेषलक्षणम्। यद्यपि छलजातीयानि[अपि]निग्रहस्थानानि एव; निरनुयोज्यानुयोगप्रभेदत्वात्, तथापि निग्रहस्थानत्वसाक्षाद्व्याप्यविशेषलक्षणमाह्निकार्थः[1]। छलत्वादिकन्तु तद्व्याप्यनिरनुयोज्यानुयोगव्याप्यमिति न तथा[2]। छलत्वार्थातिरिक्तत्वेन वा विशेषणीयम्। विशेषलक्षणाभिधानं च तज्जिज्ञासायाम्। सा च विशिष्यधर्म्युपस्थितौ च स्यात्। सापि विशेषणाधीना। न च सामान्यलक्षणं विना तदवतार इति तद्वाक्यम्[च्यम्]। तत्र न तावत् कथाया मच्छङ्काखण्डनं निग्रहः, पराजितस्या[पि]द्वन्द्वानपायात्, कथात्वस्य दुर्वचनत्वाच्च।

तथा हि न तावत् नानाप्रवक्तृकंविचारविषयकवाक्यसन्दूषित [सन्दोह] त्वं[3] तत्। नानाप्रवक्तृकत्वं नैकस्यापि वाक्य[स्य]सम्भवात्[संभवति]न हि समुदाय्यनन्वये समुदायान्वयः। विचारश्च यदि वचनं न तस्यैव तद्विषयता। साधनदूषणे चेत् प्रत्येकसमुदायाभ्यामव्याप्तिः। द्वितीयकक्षायां प्रतिवादिस्तम्भेन पर्याप्तायां कथायामव्याप्तिः। तत्र नानाप्रवक्तृका[कत्वा]भावात्। नापि शब्दत्वावान्तरजातिभेदः। व्यञ्जकार्थभेदमप्रतीत्य तदप्रतीतेः। तस्य च निरूपयितुमशक्यत्वात्। नापि प्रकृतविषये विप्रतिपत्त्यप्रतिपत्ती[त्ति] निग्रहः। अननुगमात्। नवा सर्वत्र निग्रहस्थाने विप्रतिपत्त्यप्रतिपत्ती, प्रकृतविषयसम्यग्ज्ञानवतोऽपि सभाक्षोभादेव, [अ]ननुभाषणस्य क्रियाविरहरूपस्यान्न[4] खलु ज्ञानमाविष्कृत्याऽनुत्तरदानस्य च सम्भवात्। यदि च प्रकृतं जानतोऽप्यप्रकृतज्ञानात्मकविप्रतिपत्तिमत्तया निग्रहः स्यात्तदा तत्र वादिनोऽप्यप्रकृतावर्जनीयघटादिज्ञानान्निग्रहः स्यादिति विप्लवः।

अथोद्देश्यकथात्मकशब्दसन्दर्भनिष्पादिका प्रतिपत्तिस्त्वप्रतिपत्तिः, तद्विपरीता प्रतिपत्तिर्विप्रतिपत्तिः। तथा च तथाभूतव्यापारान्नि[नि]ष्पादकं सम्यग्ज्ञानमपि विप्रतिपत्तिरिति चेत्, न, झटिति सम्वरणेऽतिव्याप्तेः। अत एव कथायां वादिप्रति-

---

१. "साक्षाद्व्याप्यजातिविशेषरूप" मित्यर्थः। साक्षाद्व्याप्यत्वं नाम तद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वम्। तत्र सत्यन्तकृत्यमाह—छलत्वादिकमिति।

२. न साक्षाद्व्याप्यम्। अतो न तत्रातिव्याप्तिरितिशेषः।

३. विषयवाक्यसमूहत्वं युक्तः पाठः।

४. सम्भवात्। 'न खलु' इत्यधिकम्।

वादिनोः पर[स्परा]पेक्षया प्रकृतविषयापकर्षलिङ्गत्वं तत्। अपकर्षश्च कथाहेतु-प्रकृतविषयसम्यग्ज्ञानविरह इति परास्तम्। सर्वत्राव्याप्तेः।

उच्यते, कथकोद्देश्य[क]कथाफलप्रयोजककथाहेतुयथार्थज्ञानविरहलिङ्गत्वं निग्रहस्थानत्वम्। यत्र प्रकृतविषययथार्थज्ञानवतः सभाक्षोभादननुभाषणम्, यत्र चानुक्त्याऽप्रतिभा तत्र कथाफलप्रयोजकयथार्थज्ञानाभावोऽस्त्येवेति नाव्याप्तिः सूत्रेऽप्यप्रतिपत्तिविप्रतिपत्तिशब्दाभ्यां तादृशं लिङ्गं लक्ष्यते। अन्यथा निग्रहस्थानशब्दस्य-प्रतिज्ञाहान्यादिसामानाधिकरण्यानुपपत्तेः।

कथात्वञ्च वादिप्रतिवाद्यन्याभिधानास्थापना वादिसाधनाभिधानप्रतिवादि-दूषणाभिधानवृत्तिवाक्यत्वाधिकरणनिष्पादनोद्देशप्रवृत्तवादिप्रतिवाद्यन्यतरसाधनदूषणा-न्यतराभिधानत्वम्। एकार्थत्वे युद्धवत् परस्परोद्देशात् मिथः कर्मतया साकाङ्क्ष-त्वादेव वाक्यत्वम्। उक्तस्तम्भावसानेऽपि त[क]थोद्देशप्रवृत्तेः सत्वात्। नच कथावयवे षट्पक्ष्यां चातिव्याप्तिः, शाब्दानुभवप्रयोजकज्ञानाजनकत्वेन षट् पक्ष-स्यान्यत्वेन च विशेषणात्।

सप्त चेह प्रकरणानि। तत्र विभागसूत्रेण सह षड्भिः सूत्रैः प्रतिज्ञाहेत्वन्य-तराविषयबुद्ध्यविषयनिग्रहस्थानपञ्चकविशेषलक्षणमाद्यप्रकरणार्थः। अन्यानि च यथास्थानं वक्ष्यन्ते। तत्र परस्परासङ्कीर्णनिग्रहस्थानत्वव्याप्याः कत्युपाधयः इति विभागो[गे]स्थापकजिज्ञासायां विभागोद्देशसूत्रम् —

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तर-मर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तम-ननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि।५।२।१।**

स्वकार्ये परस्परनैरपेक्ष्यसूचनाय वक्ष्यमाणप्रातिस्विकवैधर्म्यसूचनाय चास-मासः। नच जातिष्वप्यत्येतत् समानमिति तत्राप्यसमासापत्तिः। समपदावृत्तौ सूत्रगौ-रवात्। अनावृत्तौ संज्ञानापत्तेः। प्रतिज्ञाहानिवद्धेतुहानेः, प्रतिज्ञाविरोधवत् प्रतिज्ञो-दाहरणविरोधस्य च सम्भवेऽपि न विभागानुपपत्तिः। एष्वेव तदन्तर्भावात्। अमी-षाञ्चोपाधीनां क्वचिन्मिथः साङ्कर्येऽपि क्वचिदवसरेषु [अ]साङ्कर्यात् विभागा-विरोधः। परस्परानाश्रयाश्रितोपाधीनां विभागात्र च परस्पराश्रयानाश्रितोपाधीनां चतुर्थः [चार्थः]। तेन स्वयमुपन्यासे कथाबाह्यानामबाह्यानामपस्मारोन्मादादि-दशापन्नानां झटिति संवरणेन तिरोहितावसराणामनधिकृतोद्भावितानां च व्यवच्छेदः। तथा विधानां तात्कालिकातत्त्वज्ञानलिङ्गत्वेऽपि प्रतियोग्यपेक्षयाऽपकर्षज्ञापकत्वेना-नपेक्षितानां समयबन्धप्रतिबन्धबहिर्भावात्। न च कथावाच्यानां प्रसक्तिरेव नास्ति, कथायामेव निग्रहादिति वाच्यम्। यत एव तत्र न निग्रहस्थानत्वं तत एवातिव्याप्तेः।

तत्रापि प्रतिज्ञाहान्यादित्वमप्यक्षतमेव । कथायामेव निग्रह इति व्यवच्छेदफलमित्यन्ये । अत्र चकारोऽनुक्तदृष्टान्ताभासादिसमुच्चयार्थं इति केचित् ।

तन्न । "हेत्वाभासाश्च यथोक्ताः" ।५।२।२४। इत्यनेनैव तत् संग्रहात् । तेषां हेत्वाभासान्तर्भावस्य वक्ष्यमाणत्वात् । अनन्तर्भावेऽप्यन्त्यसूत्रचकारस्यानुक्तसमुच्चयार्थतया तल्लाभात् । तथाप्यनुक्तप्रत्यक्षाभासादिसमुच्चयार्थश्चकारः स्यात् । नच तेषां नापकर्षसूचकत्वम् । अनुमानाभासेनाविशेषात् । नहि शङ्खपीतिम्नः प्रत्यक्षम्, चैत्यवन्दनस्यामुष्मिकेष्टसाधनत्वे सौगतागमम्, गोसादृश्यविशिष्टस्य गवयपदवाच्यत्वे वोपमानं प्रमाणं यतः तदन्येऽभियोगहेतव इत्यन्ये । तन्न, प्रमाणान्तराभासानामपि कथादशायामनुमानच्छाययैव प्रयोगेण पृथगाभासत्वाभावात् ।

सौगतास्त्वसाधनाङ्गवचनमदोषोद्भावनमिति द्वयोर्निग्रहस्थानत्वम् । अन्यत्तु न युक्तमिति नेष्यत इति न द्वाविंशतिस्तत्प्रभेद इत्याहुः । तन्न, यथाश्रुतस्याप्रतिभाद्यव्यापकत्वात् ।

अथ तत्संग्रहार्थं नञः प्रसज्यप्रतिषेधपर्युदासाभ्यां व्याख्याने साधनाङ्गवचनाभावः, तदन्यवचनं च विवक्षितम् । तर्हि यथार्थप्रतिप्रत्त्यभावविरुद्धप्रतिपत्तिभ्यामपि सामान्यसंग्रहणविरोधः ।

अन्ये त्वाहुः, छलजातिनिग्रहस्थानानां कथावयवत्त्वात् तदुद्भावनादेश्च कथाशरीरत्वाद् वचनरूपमेव निग्रहस्थानमित्यप्रतिभादयोऽपि वचनरूपा एव बीजादेर्न मां[?]प्रतिभातिकिञ्चिदित्यन्तर्ज्जल्परूपत्वादिति । तन्न, यथा हि विवादविषयशब्दानित्यत्वादिप्रतिपादकं वाक्यं कथावयवो नान्यः, तद्वदप्रतिभाद्युद्भावकं वाक्यं कथावयवो न त्वप्रतिभादिः, तस्यावाक्यरूपस्य वादिपुरुषनिग्राहकत्वात् । नवायं नियमो यदेवमन्तर्जल्पन्नेव निगृह्यते चिरं प्रतिसन्धानार्थं प्रणिदधानस्य तूर्ष्णी[तार्कि]कस्य निग्रहात् । तस्माद्वाक्यमवाक्यम्वा पुरुषं निग्राहयति ।५।२।१।

[प्रतिज्ञाहानिलक्षणम्]

सूत्रम् :—

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ।५।२।२।**

कथमत्र सूत्रार्थः । न तावत् प्रतिदृष्टान्तस्य साध्याभाववत्त्वेनोभयवादिसम्प्रतिपन्नस्य यो धर्मः साध्याभावः तस्य स्वदृष्टान्तसाध्यवत्तया स्वीकृतेऽभ्यनुज्ञा प्रतिज्ञाहानिरित्यर्थः। तथा सति दृष्टान्तभूतसामान्यधर्मनित्यत्वाभ्युपगमः शब्दोऽपि नित्योऽस्तु, इत्येवंरूपः [पा] प्रतिज्ञाहानिः । पक्षहेतुदृष्टान्तदूषणहानेरव्यापनात् । न च सा न निग्रहस्थानम्, अविशेषात् ।

उच्यते । प्रतिज्ञाशब्देनाजहत्स्वार्थलक्षणया निर्वाहानिर्देश उपलक्ष्यते । तेन कथायां यद्यथा निर्दिश्यते तत्तथा निर्वाहयितुमुचित इति साध्यहानिवद् दृष्टान्त-

हानिरपि लभ्यते। एवं च लक्ष्यपदनिरुक्त्यैव लक्षणसिद्धौ शेषं द्वितीयप्रकार सूचनार्थम्। यथा, "यदि दुष्टमेतन्माभूदेवमिति कश्चनोऽन्यथास्तु, इत्यनुभव" इत्याचार्याः।

ननु चान्यथास्त्विति नेयं हानिः। रूपान्तराभ्युपगमे पूर्वत्यागानावश्यकत्वात्। तथात्वेऽपि प्रतिज्ञान्तरमेव स्यान्न हानिः 'तदुपजीवित्वेन जघन्यप्रतिपत्तिकत्वादिति चेत्, 'अन्यथास्तु' इति पूर्वोक्तं परित्यज्य न वा? अन्त्येऽर्थान्तरम्। आद्ये त्याग एवोपजीव्य आवश्यकश्च। न चेह प्रतिज्ञान्तरलक्षणमविशिष्टमुक्तं तत्रैव, विशेषणेनान्तराप्रक्षेपात्।

**नवीनास्तु** लक्ष्यलक्षणप्रमाणस्य विशेषस्योपस्थितौ स्वीकृतोक्तत्वस्य सामान्यस्योपस्थितेरावश्यकत्वापत्तेर्नैव[1] हानेरन्वयाद् विशेषणान्तराणां न लक्षणे निवेशः, अनाकाङ्क्षितत्वात्। पक्षहेत्वादिहानीनां निग्रहस्थानान्तरत्वापत्तेः। प्रतिज्ञादृष्टान्तादिपदोपादानं तु उदाहरणविशेषप्रदर्शनाय। एवं च पक्षादिहानिः व्याप्तिः। तत्र स्वीकृतोक्तत्यागः प्रतिज्ञाहानिरिति न लक्षणम्; अनिग्रहस्थाने झटिति संवरणे गतत्वात्। निग्रहस्थानसामान्यलक्षणानुवृत्या तन्निरासेऽपि स्वीकृतेतीष्टमात्रमुच्यते, अस्तित्वेनेष्टं वा?

आद्ये केनचिद्रूपेणेष्टस्य रूपान्तरेण त्यागः क्व नाम नास्तीत्यतिव्याप्तिः। स्वीकारपूर्वकोऽस्वीकारस्त्यागः। न च स्वरूपान्तरेण तत्र तत् स्वीकारः ततः त्याग एवासौ नेतिचेत्। तर्हि स्वीकारस्य त्यागपदार्थान्तर्भावे स्वीकृतेति व्यर्थम्।

अन्त्ये अस्तित्वेनेष्टस्य रूपान्तरेणानिष्टत्वं क्व नाम नास्तीत्यतिव्याप्तिः। संयोगाद्यव्याप्यवृत्तितावादिपक्षे चैकस्यैव संयोगस्यैकत्रास्तित्वनास्तित्वाऽभ्युपगमात्। कालदेशादिभेदेन च सत्त्वासत्त्वाद्युपगमे प्रसङ्गो द्रष्टव्यः। तस्यैव तदैव तेनैव तत्रैवेष्टानिष्टत्वस्य विवक्षितत्वे कालं स्वीकृत्य स्वीकुर्वतः[2] प्रतिज्ञाहानिर्नस्यात्। तत्र तदेत्युक्तविशेषणाभावात्। कालं प्रति तददोषत्वेऽन्यत्रापि तथात्वापत्तिरिति खण्डनकारः।

तन्न। तथाहि नास्ति[ति]व्याप्तिः। त्यागस्य त्याज्याकाङ्क्षायां स्वीकृतपदोपात्तस्वीकारनिरूपकरूपस्यैव लाघवाद् प्रागन्व [?] गमने स्वीकारत्यागयोरभिन्नप्रकारकत्वप्रतीतेः। नच स्वीकृतेष्टपदयोः पर्यायत्वम्। इष्टपदस्येच्छाविषयार्थत्वादभ्युपगमगोचरत्वस्य च स्वीकृतपदार्थत्वात्। नवा परित्यागपदार्थान्तर्भूत एव स्वीकारो येन वैयर्थ्यं स्यात्।

---

१. त्तेः तेनैव।

२. अस्वीकुर्वतः।

वस्तुतः स्वीकारविरोधिमात्रविषयत्वस्य त्यागपदार्थत्वात् । न तु तेनैव रूपेण शक्तिः परित्यागश्चोक्तानङ्गीकारसूचक उक्तिविशेष इति न दुरधिगमः । स्वीकृत-शब्दबलाच्चापेक्षितार्थलाभात् । नापि रूपान्तरेण स्वीकृतस्य रूपान्तरेणास्वीकारः त्यागः । तस्य स्वीकाररूपज्ञानविरोधित्वात् । रूपान्तरेणास्वीकारस्य च रूपान्तरेण स्वीकाराविरोधात् । एवं संयोगादेव[देर]व्याप्यवृत्तित्वे कालदेशादिभेदेन सत्त्वा-सत्त्वाभ्युपगमेनाभि[ति]व्याप्तिः स्वीकारत्यागयोरर्थविरोधे पर्यवसानात् । संयोगादौ चाविरोधात् । न च कालस्य कालावृत्तितया तमभ्युप[ग]म्य त्यजतो न हानिः । वस्तुतः तदवृत्तित्वे तदभ्युपगम्य त्यागाविरोधात् । तावतैव हानित्वात् । न वा कालस्य कालावृत्तित्वमपि पुराणे[कार्षापणे] पणस्यैव वर्षादौ मासादिसत्त्वात् [?] । तथाप्यपसिद्धान्तेऽतिव्याप्तिः । नचोक्तपदेन तन्निरासः, 'नैयायिकोऽहं' इत्यनेन सकलशास्त्राभिधानात् । इह शास्त्रबहिर्भूताधिकरणसिद्धान्तलभ्यानु[अन्य] विपरीताभ्युपगमव्यवच्छेद इति चेन्न, तस्य शास्त्रबहिर्भावे तदुपादानानुपपत्तेः । न च येन प्रकारेणोक्तिः तेन त्याग आकाङ्क्षितः । शब्दोऽनित्य इति प्रतिज्ञाय न किञ्चिदनित्यमिति त्यजतः तदभावापत्तेः ।

मैवम्, सम्वरणावसरे[1] कथायां विशिष्योक्तस्वीकृतत्यागः प्रतिज्ञाहानिरिति लक्षणात् । न च स्वीकृतत्यागमात्रस्यैवाशक्तिलिङ्गत्वेनोक्तपदवैयर्थ्यम्, तद्धि न [तस्य] लक्षणम्, अपसिद्धान्तस्य व्यावर्त्यत्वात् । नाप्यशक्तिलिङ्गत्वे[त्वं] अशक्ति विशेषोन्नयनात् ।

नन्वेवं हेत्वन्तरेऽपि विशिष्टहेतुताङ्गीकारेऽविशिष्टस्य हेतुत्वं त्यक्तमेव । एवं प्रतिज्ञान्तरेऽपि विशिष्टसाध्यताऽङ्गीकारेऽप्यविशिष्टस्य साध्यत्वं त्यक्तमेव । अन्यथा पूर्वदोषपरिहारानौपयिकत्वादर्थान्तरतापत्तेरित्यतिव्याप्तिरिति चेन्न, विशेषणवच-नेऽपि विशेष्यस्वरूपापरित्यागात् । विशेषणाभावस्य चानुक्तत्वात् । हानेस्तदुपजीवि-त्वाच्च । "अग्निमदिदं सुरभि मलिनधूमवत्त्वात्" इत्यत्रासमर्थविशेषणतया दूषणे कृष्णागुरु वह्निमदिति विशेषोक्तौ क्वचित् सङ्करेऽप्यविरोधात् । तथापि विरोध एव दोषोऽस्तु परिग्रहवर्जनयोरेकस्य विरुद्धत्वात् ।

अथैकवाक्यतत्त्वे विरोधो, हानिस्त्वान्तरालिकसमाधेयदोषान्तरिततया भिन्नवाक्यगतेति चेन्न, वाक्यैकवाक्यतया द्वयोरप्यविशेषात् । न[?]त्यागसमुद्भाव्य-विरोधस्योद्भावयितुमशक्यतया जघन्यरूपत्वेन त्यागस्यैवाभियोगहेतुत्वात्, प्राथमि-कत्वात्, सेयं पञ्चधा, पक्षसाध्यहेतुदृष्टान्ततद्विशेषणभेदात् । यदि तु दूषणानां हेतुत्वे-नाप्रयोगः, तदा तद्धानिः पृथगेव ।

---

१. संवरणानवसरे ख ।

तत्र पक्षहानिर्यथा 'वाङ्मनसे अनित्ये कार्यत्वात्' इत्युक्ते भागासिद्धचा च प्रत्युक्तेऽस्तु वागेवानित्येति। ननु चात्र मनसः पक्ष[त्व]त्यागे साध्यसाधनधर्मयोरपि त्यागात्तद्धानिरपीति चेन्न, क्वचित्सङ्करेऽप्यन्यत्रासङ्करात्। यथा पक्षद्वये साध्यद्वय-विप्रतिपत्तौ पक्षान्तरे हेत्वनभिधाने न्यूनतया च दूषिते मा भूदयं पक्ष इति। तत्र साध्य-हानिरेव स्यादिति चेन्न, तस्याऽनुपन्यासात्। पक्षस्य साध्यादिमत्तया परित्यागोक्तिः पक्षहानिः। हेत्वादेश्च तद्विशेषणतया परित्यागोक्तिश्च हेत्वादिहानिरिति विवेक इति केचित्।

साध्यहानिर्यथा, शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्येऽनैकान्तिकमिति प्रत्युक्तेऽस्तु तर्हि शब्दोऽपि नित्य इति।

हेतुहानिर्यथा तत्रैव, अस्तु तर्हि कृतकत्वादनित्य इति। दृष्टान्तहानिर्यथा, अनित्यः शब्दः प्रत्यक्षगुणत्वाद् द्वचणुकवदित्युक्ते दृष्टान्तस्य साधनवैकल्येन प्रत्युक्ते, मा भूद् द्वचणुकमुदाहरणं, रूपन्तु स्यादिति। यथा वा व्यतिरेकोदाहरणबलेन क्षणभङ्ग-साधने पुञ्जवदित्युक्ते दूषिते च, अप्रामाणिकतयाऽस्तु घट एवान्वयेन दृष्टान्त इति।

पक्षविशेषणहानिर्यथा, विवादाध्यासितं क्षित्यादि कर्तृजन्यमिति प्रतिज्ञाय, अन्यतरवैकल्येन दूषणेऽस्तु विवादाध्यासितमेवेति। साध्यविशेषणहानिर्यथा, क्षित्यादि बुद्धिमत्कर्तृपूर्वकमित्युक्ते बुद्धिमदिति विशेषणा[णेऽ]सामर्थ्येन प्रत्युक्तेऽस्तु तर्हि कर्तृपूर्वकमित्येवेति। हेतुविशेषणहानिर्यथा, शब्दोऽनित्यः प्रयत्नकार्यत्वादित्युक्तेऽस्तु कार्यत्वादेवेति।

ननु न पूर्वत्र साध्यविशेषणहानिपदमात्रस्यैव हानेर्बुद्धिमत्त्वस्यैव हानेः, बुद्धिमत्त्वस्यैककर्तृक्रोडीकृतत्वेनापरित्यागात्। एवं प्रयत्नकार्यत्वादित्यत्र न प्रयत्नानां संत्यागः, किन्तु शब्दमात्रस्य, विवादाध्यासितमित्यत्र तत्पदेनैव क्षित्यादेरपि पक्षी-करणान्नार्थत्यागः। शब्दपरित्यागस्तु तदुच्चारणपर्यवसन्नः। न च तावन्मात्रेण हानिः, लक्षणासंग्रहादतिप्रसङ्गाच्च।

अत्राहुः—कृत्याधारपूर्वकतामात्रविप्रतिपत्तौ बुद्धिमत्कर्तृ[क]त्वसाधनेऽर्था-न्तरत्वरूपविशेषणासामर्थ्ये वर्णितेऽस्तु तर्हि कर्तृपूर्वकत्वमेव साध्यमित्यत्रार्थस्य हानमेव। एवं प्रयत्नकार्यत्वासामर्थ्ये वर्णितेऽस्तु कार्यत्वादेवेति। अत्र प्रयत्नानां सस्यार्थ-स्यापि[1] [?]त्यागो भवत्येव। तथा सति स्वसिद्धान्तविरोधः स्यादिति चेत्, सत्यम्, नैतावता विशेषणहानेरुदाहरणं न भवतीति ध्येयम्। तथा क्षित्यादिव्यतिरिक्तत्व-विवादे क्षित्यादित्वेन विवादाध्यासितमेवोपनयतोऽर्थे दूषितेऽस्तु तर्हि विवादाध्यासित मित्येवोक्तावर्थपरित्यागोऽस्त्येवेति पक्षविशेषणहानिरुपपद्यते।

दृष्टान्तविशेषणहानिर्यथा—यत् कृतकं तदनित्यम्, यथा घटद्रव्यम्, इत्युक्ते

---

१. 'प्रयत्नांशस्यार्थस्यापि' इति स्यात्।

द्रव्यपदार्थानर्थक्योक्तावस्तु तर्हि घट एवेति । दृष्टान्ते साध्यहानिर्यथा—शब्दोऽनित्य ऐन्द्रियकत्वात्, सामान्यवत्, इत्युक्ते साध्यविकलतया च प्रत्युक्तेऽस्तु तर्हि नित्यत्वे दृष्टान्त इति ।

दृष्टान्ते साधनहानिर्यथा—[1]तत्रैव द्व्यणुकवदित्युक्ते साधनवैकल्येन च प्रत्युक्तेऽस्तु तर्हि कार्यत्वहेतौ दृष्टान्त इति । दृष्टान्तसाध्यविशेषणहानिर्यथा—यत् कार्यं तत् बुद्धिमत्कर्तृपूर्वकम्, यथा घटः, इत्युक्ते पूर्ववच्च दूषिते तर्हि कर्तृपूर्वकमेवास्त्विति । एवं तत्र साधनविशेषणहानिर्यथा—प्रयत्नकार्यत्वादित्युक्ते, दूषिते च कार्यत्वादित्यत्रैव दृष्टान्तोऽस्तु, इति तत्तद्रूपवत्तया दृष्टान्तत्यागात् । साध्यादिहानीनां दृष्टान्तहानौ प्रवेशः । दूषणहानिस्तु निरनुयोज्यानुयोगोद्भावनानन्तरं दूषणानन्तर-[णान्तर]परिग्रहे दष्टव्या । यथा यदि नायमसिद्धोऽस्तु तर्हि बाधित इत्यादि । क्रमहानिस्तु नाधिका । तत्तत्प्रकारकसाध्यादिहानावेवान्तर्भावात् । विशेषणहान्यादीनामप्युक्त एवान्तर्भावः । कथञ्चित् विशेषणत्वात् प्रतिभाक्षयः सदसद्वादी[०दि]नां कारणं प्रक्रान्तानैकान्तिकादिपरिहारप्रयोजनम् ।

अथ पूर्वदोषान्वय[उप]निपाते हान्यनुपपन्नेस्तन्निदानदोषोपनिपातप्रभवनिग्रहस्थस्य किं प्रतिज्ञाहान्येति चेन्न, दन्दशूकदष्टाङ्गुलीवद् दुष्टत्यागेनैव पूर्वनिग्रहपरिहारात् । नहि त्यक्तस्य दुष्टत्वेऽस्य काचित् क्षतिः । ततः पूर्वनिग्रहस्थापनाय त्याग एवोद्भाव्यः । तथापि तदर्थमेवास्योपयोग इति चेन्न, स्वयमप्यशक्तिसूचकत्वात् । सद्धानौ दोषान्तरासम्भवाच्च । सेयं नियमेन तृतीयादिकक्षापातिनी तदुत्तरकक्षोद्भाव्या । तत्रोपेक्षिता पर्यनुयोज्योपेक्षणनिदानम् । प्रथमादिकक्षा[क्ष्या]यामपि दूषणोद्धारकातरस्येयमनुपतति ।

न च स्वकक्षा[क्ष्या]यां त्यागेऽप्यनिग्रहः । कथारम्भे पक्षं परिगृह्य पश्चादनुमानप्रयोगानन्तरं नास्ति शब्दोऽनित्य इति त्यागात् । नचेदं सम्वरणमेव, तदुत्तरकालमस्यानभिधानादिति केचित् । तर्हि तत्राप्रतिभाया एवासम्भवात् कारणासम्भव एवेत्यन्ये । सद्धानौ पर्यनुयोज्योपेक्षणसहचारिणीति तद्धानिप्रयोजकदोषस्यावश्याभासत्वेन तमुपेक्ष्य स्वीकृतं त्यजतोऽवश्यं पर्यनुयोज्योपेक्षणात् । वादे त्वसद्धानिः सम्भाविताऽप्युपेक्षणीया । तदुद्भाव[न]स्य तत्त्वज्ञानानङ्गत्वात् । सद्विषया च साऽवश्योद्भाव्या, तदुद्भावनस्य तदङ्गत्वात् । उक्तं निर्वाहयेदिति रहस्यमत्र ।५।२।२।

## [प्रतिज्ञान्तरलक्षणम्]

प्रतिज्ञानिरूप्यत्वसंगत्या सूत्रम्—

**प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ।५।२।३।**

प्रतिज्ञातार्थे दूषिते तत् प्रतिचिकीर्षया विशेषणान्तरप्रक्षेपेण पुनर्वचनं प्रतिज्ञान्तरम् । तथा हि—धर्मविकल्पो धर्मविशेषः । तस्य स्वज्ञानद्वाराऽभिलापप्रयोजक-

---

१. शब्दोऽनित्यः, ऐन्द्रियकत्वात्, इत्यत्रैव ।

त्वाद्धेतौ पञ्चमी, ज्ञानमेव वा विकल्पः। तत्र धर्मशब्दो विषयविशेषपरः। तथा चाभिलापप्रयोजकज्ञानविषयत्वेन धर्मविशेषनिर्देशलाभः। ल्यब्लोपे वा पञ्चमी। धर्मस्य विकल्पं विशेषं प्रक्षिप्येत्यर्थात्। तदर्थस्य प्रतिज्ञातार्थस्य निर्देशलाभः। तेन परोक्तदोषपरिजिहीर्षामूलकतयैव तदुक्तिसम्भवः। तदुत्तरक[क्ष्या]पातित्वञ्चोक्तम्, तेन परोक्तदूषणोद्धाराय पूर्वानुक्तविशेषणवतः पूर्वोक्तस्य साधनीयांस[श]स्य प्रतिपादनपरं[1] प्रतिपादनमिति पर्यवसितं लक्षणम्।

यत्तु खण्डितं कथाप्राक्कालायुक्तविशेषणवतः कथारम्भेऽभिहितस्य परेण निर्विशेषणभ्रमाद्दूषितस्य "नेदमविशिष्टं मयोक्तं येन तद्दूषणं संगच्छेत, किन्तु विशिष्टमतो निरनुयोज्यानुयोगो भवत" इति सदुत्तरेऽतिव्यापकमिदम्। न च विशेष्याऽभिधानाकालानुक्तविशेषणवतोऽभिधानं तथा, प्रकथाप्राक्कालस्तु न विशेष्याभिधानकाल इति वाच्यम्। वाचां क्रमभावितया विशेष्यविशेषणाभिधानयोरेककालत्वासम्भवात्, तदव्यवहितोत्तरकाल इत्यन्या[स्या]ऽपि पूर्वनिपातिविशेषणाव्यापकत्वात्। तदव्यवहितकाल इत्यस्य च वस्तुविशेषणाव्यापकत्वात्। विशेषणाभिधान इत्यप्ययुक्तम्। नानाविशेषणके विशेष्ये सर्वविशेषणाभिधानकालानां सर्वविशेषणसाधारणत्वादिति।

तन्न, विशेष्यसमभिव्याहारौपयिककाले विशेषणानभिधानं प्राग्विशेषणस्यावचनं, ततश्च विशेष्यावबोधकवाक्यजनितविशेषणधीकालस्य पूर्वकालत्वमत्र विवक्षितमित्यन्यथाऽपि विकल्प्य दूषणाभिधाने छलापातात्। न च दूषणकालस्य तथात्वाभिमतावपि दूषणान्तरविशेषणोक्तेस्तदानीमभावादतिव्याप्तिः। तदानीं दूषणोक्तिमत्वाभावस्य विवक्षितत्वात्।

तदेतत् पक्षतद्विशेषणसाध्यतद्विशेषणोक्तिभेदाच्चतुर्विधम्। क्रमेणोदाहरणम्। यथा वर्णाः नित्याः श्रावणत्वाच्छब्दत्वादित्युक्ते ध्वनिभिरनेकान्त इति प्रत्युक्तेः, सध्वनय एव वर्णाः नित्याः इत्यतो नानैकान्तिकमिति।

ननु पक्षान्तरवचनमिदं स्वातन्त्र्येण न तु विशेषणान्तरवचनम्, अतो नेदमुदाहरणम्, न, विशेषणशब्दस्य संबन्धिमात्रपरत्वात्। तथापि यदि परेण ध्वनिरनित्य एव स्वीक्रियते तदेदानीं नित्यत्वसाधनेऽपसिद्धान्तः।

अथ नित्य एव परेषां ध्वनिः, तदा पर्यनुयोज्योपेक्षणमिति निग्रहान्तरेण गतार्थतेति चेन्न, अङ्गीकृतशास्त्रार्थविरुद्धाऽभ्युपगमेऽपसिद्धान्तात्। यत्र तु शास्त्रमतिप्रत्ययमेव ध्वनेर्विशिष्य नित्यत्वमभ्युपगम्यते, तत्र प्रतिज्ञान्तरसम्भवात्। पक्षविशेषणाधिकोक्तौ यथा शब्दोऽनित्यः कार्यत्वादित्युक्ते ध्वनिविभागे सिद्धसाधनमिति प्रत्युक्ते वर्णात्मकः शब्दोऽनित्य इति सिद्धसाधनपरिहारात्।

---

१. अधिकपाठः ?।

ननु चात्र ध्वनिपक्षतापरिहारात् पक्षैकदेशहानिः प्रतिज्ञाहानिरेव। न, येन प्रकारेण स्वीकारः तेनैव त्यागस्य प्रतिज्ञाहानेरुक्तत्वात्। साध्यान्तराधिक्योक्तौ यथाऽग्निमदिदं सुरभि मलिनधूमवत्त्वादित्युक्ते, प्रत्युक्ते चासम्बन्धविशेषणतया साग्नि कृष्णागुरुमदिति साध्यान्तराधिक्योक्तौ व्यर्थविशेषणतापरिहारात्। ननु यदि कृष्णागुरुमत्त्वेऽपि प्राग्विप्रतिपत्तिरासीत्, तदा परदोषोद्भावनानन्तरं स्थापनाकरणादप्राप्तकालत्वम्। अथ तत्र नासीद्विप्रतिपत्तिः तदाऽधिकमर्थान्तरम्वेति चेन्न, पूर्वमविप्रतिपत्तावपि विशेषणवैयर्थ्यपरिहारार्थं तदुपन्यासेनाधिकादेरभावात्। तत्र साध्यविशेषणान्तरं, न तु साध्यान्तरमिति चेन्न, यत्राग्नेः कृष्णागुरोश्च द्वयोः साध्यता तत्र तथात्वात्। अग्निविशिष्टस्य कृष्णागुरोरग्नेर्भिन्नत्त्वाच्च। साध्यविशेषणाधिकोक्तौ यथा—क्षित्यादिकं सकर्तृकमित्युक्ते, अदृष्टद्वाराऽस्मदादिभिः सिद्धसाधनेन प्रत्युक्ते, भोक्तृविलक्षणकर्तृपूर्वकमिति सिद्धसाधनपरिहारात्।

ननु निगमनतद्विशेषणान्तरवचनात् तथा साध्यद्वयं निर्देशदृष्टान्तभेदे सत्येकतरतदुपदर्शने न्यूनतया च दूषिते दृष्टान्तवचनाच्चान्येऽपि प्रकारः सम्भवदुक्तिकाः। सत्यम्, दर्शितोदाहरणमात्राभिप्रायेण सारूप्याभिधानात्। साध्यपदस्योक्तान्यसाधनीयभागपरत्वाद्वा न्यूनत्वपरिहारात्।

अथ प्रतिज्ञान्तरं यदि परोक्तदूषणपरिहारासमर्थं, तदा नोक्तिदोषसम्भवः। अथ तत्तत्समर्थं तदा सदुत्तरमेवेति चेन्न, वस्तुतस्तदपरिहारेऽपि तद्बुद्ध्योक्तिसम्भवात्। अत्र भाष्यादौ पूर्वदूषणपरिजिहीर्षया प्रतिज्ञामात्रान्तरनिर्देशः प्रतिज्ञान्तरमित्युक्तम्। तद्यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते यदा मीमांसकः सामान्येन व्यभिचारं वर्णयति तदा शब्दस्यासर्वगतत्वं प्रसाध्यते। न हेतुं विशेष्य व्यभिचारं परिहरिष्यामीत्यभिसन्धाय शब्दोऽसर्वगत इति प्रतिज्ञान्तरं करोति। तत्प्रतिज्ञान्तरं निग्रहस्थानम्। इदञ्च हेतुलक्षणायोगान्न हेतुः। किन्तु प्रतिज्ञालक्षणयोगात् प्रतिज्ञान्तरम्। तर्हि स्वयमेव पञ्चावयवं वाक्यमुच्चार्य कथं प्रतिज्ञातार्थसाधनाय प्रतिज्ञामेवोच्चारयति।

अथ हेत्वधीना साध्यसिद्धिरिति जानन्नपि सभाक्षोभेण हेतुं न ब्रूते; तथापि प्रतिज्ञामात्रमभिधाय विरतस्य न्यूनेन निग्रहः स्यादिति चेन्न, यत्र पूर्व[प्र]क्रान्तं हेत्वादिकमन्वययोग्यं सर्वथा नास्ति तत्र न्यूनावकाशात्। तथापि पूर्वनिग्रहपरिजिहीर्षामात्रेण तदपरिहारे, स तदवस्थ एवेति किं निग्रहान्तरोद्भावनेन निगृहीतस्य निग्रहानर्हत्वादिति चेत्, सत्यम्, तूष्णीम्भाव एवोचितः। किन्तु प्रयोजनसिद्ध्यर्थं न तथा। तथाहि तूष्णीम्भावे किमयं दूषणं परिहृतमनेनेत्यभिसन्धायाप्रतिभया तूष्णीमास्ते। किम्वा पूर्वदूषणानास्कन्दनात् किमत्र वाच्यमिति मास्तु इति परिषत्। सन्देहानिवृत्तावुत्कृष्टाऽनुत्कृष्टव्यवस्था न स्यादिति। तथापि पूर्वोक्तमनैकान्तिकमेवोद्भावयेदिति चेन्न, एवं हि प्रतिवदेत्तथापि पूर्वोक्तप्रतिज्ञायामैन्द्रियकत्वमनेकान्तमेव। यद्वैतस्मिन्नपि प्रतिज्ञातार्थे तदनैकान्तिकमेव। यद्वैतेन साध्यान्तरवचनेन तन्न परिहृतमिति।

प्रथमेऽर्थतोऽपरयोः कण्ठतः[?]सर्वथा न प्रतिज्ञान्तरमनुद्भाव्य स्थातुं शक्नुयात्। न चेदमर्थान्तरं, प्रक्रान्तोपयोगस्योक्तत्वात्। नाप्यपार्थकम्, शब्दोऽनित्योऽव्यापकश्चेत्यत्रान्वयप्रयोजकरूपसत्त्वात्। नापि हेत्वन्तरम्, साधकभागस्य पुनर्विशेषणानभिधानात्।

अथ हेत्वन्तरं कुतः पृथगस्मात् क्रियते। नहि प्रतिज्ञाहानिमभिधाय हेतुहानिः पृथगभिहिता। किन्तु प्रतिज्ञाहानिपदस्य निर्वाहाय हानिपरतया यथा सर्वसंग्रहः, तथाऽत्रापि प्रतिज्ञान्तरपदं निर्वाह्यान्तरपदमुचितम्। अन्यथा प्रत्यवयवमवयवान्तरं लक्षणीयं स्यात्। तथा शब्दोऽनित्यो जातिमत्त्वे सत्यस्मदादिबाह्येन्द्रियप्रत्यक्षत्वात्। यदस्मदादिबाह्येन्द्रियप्रत्यक्षं तदनित्यं, यथा घट इत्युक्ते प्रयोजकभागन्यूनतया च प्रत्युक्ते जातिमत्त्वे सतीदमुच्यते। एवं 'तथाचायमस्दादिबाह्येन्द्रियप्रत्यक्ष' इत्युपनये न्यूनतया दूषिते तथैव विशेषणोपादान उपनयान्तरम्। एवमेव वहन् प्रतिज्ञैकदेशोपसंहारे तथैव प्रत्युक्ते पुनः समस्तोक्तौ निगमनान्तरमिति।

उच्यते, साध्यान्त[र]स्योक्तस्य विशेषणवतः पुनरभिधानं प्रतिज्ञान्तरम्। साधकभागस्य तु पुनस्तद्वचनं हेत्वन्तरमिति विवक्षितत्वाभेदेनोपन्यासः लाघवादुक्तमात्रस्यैव तन्त्रभया[1][द्]व्यर्थविशेषणत्वमिति चेन्न, कथकाशक्तिविशेषोन्नायकत्वेनाभियुक्तैः पृथग्व्यवह्रियमाणस्य हेत्वन्तरस्य व्यावर्त्यत्वात्।

एवं तर्हि प्रतिज्ञाहानिरपि साध्यभागहानिविवक्षया न सर्वसाधारणी स्यादिति साधकभागहानिलक्षणं पृथक्कार्यमिति चेन्न, वाक्यप्रयोगस्य साध्यसाधकभागोभयशरीरतया हानौ पूर्वसाध्यसाधनवद् वाक्यस्य नास्या [न्य] परता, किन्तु पूर्ववाक्योपमर्दमात्रमित्यभेदविवक्षा, अत्र तु नैवमिति विशेषात्। अतएव सन्यासात् भेदविवक्षा तव प्रतिज्ञान्तरमुदाहरणवाक्ये साध्यभागान्तररूपं प्रयोज्यान्तरं निगमनान्तरमिति प्रतिज्ञान्तरप्रपञ्चः। हेत्वन्तरमुदाहरणप्रयोजकान्तरं, उपनयान्तरं दूषणान्तरमिति हेत्वन्तरप्रपञ्चः।

दूषणस्यापि कथायां हेतुत्वेनैव प्रयोगादस्यार्थः पूर्ववत् सदसद्विषयत्वं; कथमिदं प्रतिज्ञाहानितो भिद्यते। अत्रापि विशिष्टार्थादो[हा]नादविशिष्टस्यहानिरेव स्यादिति चेत्, कोऽय[किमिदं]मविशेषस्य हानं ? स्वरूपं वा; पश्चादुपाधी [दी]यमानविशेषणाभावविशिष्टं तदेत्र वा ? तदुभयव्यतिरिक्तं वा ? नाद्यः विशेषणोपादानेऽपि स्वरूपस्यापरित्यागात्, विशिष्टस्योपादाने केवलस्य त्याग एवेति चेन्न, कैवल्यपश्चादुपादीयमानविशेषणाभावरूपतया द्वितीयपक्षप्रवेशात्। सोऽपि न, पश्चादुपादीयमानविशेषणाभावस्य प्रागप्यनुपादानात्। न तृतीयः, उक्तोभयाभ्यामन्यस्यानिरूक्तेः। अत्र कक्षान्तरेण विशेषणीयमिति रहस्यम्।५।२।३।

---

१. तत्वसम्भवात्. इति कल्पितपाठः।

[प्रतिज्ञाविरोधलक्षणम्]

पूर्ववत् सङ्गतिः। सूत्रम्—

**प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ।५।२।४।**

यथाश्रुतमिदं यद्यपि मिथो विरुद्धाभ्यां व्यापकम्। अन्यथा निग्रहस्थानान्तरापत्तेः। तथापि प्रतिज्ञाहेत्वोरिति पदं विरोधप्रतियोगिद्वयपरम्। विरोधस्य प्रतियोगिनिरूप्यतया तदुपस्थितेरावश्यकत्वात्, तावतैव लक्षणाकाङ्क्षाविच्छेदात्, तेनैवान्वयाद् विशेषस्यानाकाङ्क्षिततया विशेषान्तरसङ्कोचकत्वादव्याप्त्यापादकत्वेनान्वयबोधाविषयत्वम्, लक्ष्यपदादभ्युपगतमात्रोपस्थितेरावश्यकतया तेनैवान्वयाप्रतिज्ञानिरूपितो विरोधहेतुव्यतिरेकेणाऽपि संग्राह्य इत्युदाहरणैकदेशस्फोरणाय प्रतिज्ञापदम्। प्रतिज्ञाहेतुविरोध इति लक्ष[ण]निर्देशस्यौचित्येऽपि प्रतिज्ञेत्येकपदकीर्तनं विरोधिप्रतियोगिमात्राक्षेपादेकस्मिन् वाक्ये पदयोरवान्तरवाक्ययोर्विरोधि[त्व]सूचनाय। तेनोक्तव्याघातो विरोध इति लक्षणम्।

ननु मिथो व्याघातः कथं विषयाप्रसिद्ध्या निरूप्यः, कीदृशो वा विरोधः। न तावद्भावाभावरूपत्वम्, श्रमणा गर्भिणीत्यादावव्याप्तेः। नापि सहानवस्थायित्वम्, गवाश्वादावतिव्याप्तिः। इदमसाधकं, अनुपलभ्योपाधिशङ्काग्रस्तत्वादित्याद्यव्याप्तेश्च। नापि वध्यघातकत्वम्, असम्भवात्। नापि परस्पराभावव्याप्यत्वम्, विरुद्धहेत्वाभासस्यैव तद्विशेषत्वापत्तेः। सहानवस्थायिनोरेकध[र्मि]निष्ठत्वाप्रसिद्धमेवेति।

उच्यते, यस्य येन रूपेण यदर्थान्वयो येनाभ्युपगतः, तस्य तेन रूपेण तेनैव तदन्वया[न]भ्युपगमो विरोधः। स च पदादिभिरुन्नीयत इति पदादेस्तथाप्रतिपादकाद्व्याघात उच्यते। नच यावज्जीवमहं मौनी ज्ञानमविषयम्, अवाचकः शब्द इत्यादिष्व[षु]विरोधप्रपञ्चेषु नाभ्युपगमान्तरं, येन व्याघातः स्यादित्यव्यापकता। मौनं हि वचनोच्चारणशक्तस्य तदनुच्चारणम्। तत्राहं मौनीति शब्दोच्चारयितृत्वमात्मनो यद्यभ्युपगच्छति तदा व्यक्तमभ्युपगमान्तरं, न चेत्, न तर्हि प्रतिपादक इति स्वत एवाप्रतिभादिस्वीकारः। एवमवाचकः शब्द इत्यादावप्यूहनीयम्। सहानवस्थायिनोरेकाबाधता[?]बोधकशब्दो वा विरोधः। अनन्वितान्वयप्रतिपादकशब्दो वा। यद्यथा स्वीक्रियते तत्तथात्वव्यतिरेकनियतो व्यापारो वा। तेन स्वक्रियाव्याघातादिसंग्रहः।

यत्तु खण्डितं घटोऽस्तीति भावोऽस्य घटसत्त्वबोधकत्वेन घटतदभावविरुद्ध[घटविरुद्धतदभाव]प्रतिपादक इह घटो नास्तीत्यत्रातिव्याप्तिरिति। तन्न, अस्तिना घटेनान्वयात्। नास्तीत्यनेन निषेधार्थेन तस्यान्वयात्। अप्रामाणिकाभिधानं विरोध इत्यन्ये।

ननु चापसिद्धान्तात् कथमस्य भेदः तत्र शास्त्रकाराभ्युपगमेन विरोधः, इह कथकाऽभ्युपगमेनैकवक्तृकवाक्यविषय इति चेन्न, नैयायिकोऽहमिति सिद्धान्तोपगमवाक्येनैव नित्यः शब्द इति वाक्यस्यैकवक्तृकत्वात्।

उच्यते। शास्त्रकाराऽभ्युपगमविरोधमप्रतीत्य स्वाभ्युपगमविरोधस्य प्रत्येतुमशक्यतयोपजीव्यत्वेनापसिद्धान्तस्यैव दोषत्वम्। केचित्तु नैयायिकोऽहमित्याद्यभ्युपगमवाक्येन[न]नैयायिकोऽहमित्यादेर्विरोधः, न तु शब्दनित्यत्वाद्युपगमेन तद्वाक्येन वा तस्मिन् सत्यप्येतदभ्युपगमस्वरूपस्या स्फूर्ते[1] रित्यसङ्कर इत्याहुः। तथापि विरुद्धे वाधे च हेत्वाभासेऽवश्यं विरोधः। तत्रावश्यं विपरीतव्याप्तिस्तदुपदर्शनञ्चेत्यतिव्याप्तिरिति चेन्न, विरुद्धवाधयोर्विरोधव्याप्यत्वेऽप्यस्याहेतुविषयतया भेदात्। यद्वा हेत्वाभासौ वस्तुगतिमनुरुध्येते। नाभ्युपगममात्रम्। अत एव तत्र विपरीतव्याप्त्यसिद्धौ सा साध्यते। तदसाधने निरनुयोज्यानुयोगात्। विरोधस्तु तेन रूपेणाभ्युपगममात्रमादाय प्रवर्तने वस्तुगतिमनुविदधाति।

यद्यपि विरोधेऽपि क्वचिद्व्याप्तिरस्त्येव, तथापि न तामुपजीव्य तत्प्रवृत्तिरित्यतो भेदः। यत्र विरोधस्तत्रावश्यमनैकान्तिकादय इति तैरेव गतार्थतेति चेन्न, तत्प्रतीत्युद्भावनयोरेतत्प्रतीत्युद्भावनोपजीव[क]त्वेन जघन्यत्वात्। अस्य च प्राथमिकतया च प्रथमोद्भाव्यत्वात्। स चायमनेकविधः प्रतिज्ञापदयोः, प्रतिज्ञाहेत्वोः, प्रतिज्ञोदाहरणयोः। प्रतिज्ञोपनययोस्तु नास्ति। हेतुनैव प्रथमभाविना सत्त्वप्रतिज्ञायाविरोधेन तदुद्भावनस्य जघन्यत्वात्।

यद्यपि यत्र विरोधवाक्यानुपदर्शितमेव प्रतिज्ञाविरुद्धमुपनयहेतुं कुरुते, तत्र प्रतिज्ञोपनयविरोधोऽस्त्येव; तथापि तत्र हेतूपनयविरोधस[सा]ङ्कर्यात्तदसङ्कीर्णप्रतिज्ञोपनयविरोधो नास्त्येव। प्रतिज्ञानिगमनयो र्हेतुस्वपदयो र्हेतुदृष्टान्तयो र्दृष्टान्तस्वपदयोः प्रतिज्ञातर्कयोः। एवं दूषणवाक्येऽपि स एषःपञ्चो[प्रपञ्चः]र्धर्मिनिषेधाद्वा, नास्त्यात्मा[इति]न चात्रापि धर्मिनिषेधादेव विरोधः। आत्मा नास्तीति सामानाधिकरण्येनान्वयान्निषेधरूप आत्मेत्यर्थात्। धर्मनिषेधाद्वा यथेश्वरो न कर्ता। धर्मिविरोधैर्वा यथाऽतीतमस्ति। न चात्राप्यतीते धर्मिण्यस्तित्वं विधीयते इति धर्मविधिरेवाऽयमिति वाच्यम्। धर्मी विशेष्योऽतीतरूपस्तस्य विधिः तत्कालसंबन्धविधानमेवेत्यर्थात्। धर्मविधेर्वा यथा परमाणवः सावयवा इति। स्वरूपतो वा यथाकार्यं हेतुव्यापारादपि प्राक् सत् कार्यत्वादिति। विशेषणद्वारा यथा–मध्येऽप्यसत्कार्यं, आद्यन्तयोरसत्वात्। एवं विधानाञ्च सभाक्षोभात्, परावलेपाद्वा सम्भवः। स्वयं प्रथमकक्षादिपाती तदुत्तरकक्षोद्भाव्यश्च वादेऽप्यन्यथा तत्त्वप्रतिपत्तिव्याघातात्। मिथो व्याहतं न वदेदिति रहस्यम्।५।२।४।

[प्रतिज्ञासन्न्यासलक्षणम्]

पूर्ववत्सङ्गतिः। सूत्रम्—

**पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः।५।२।५।**

अत्र पक्षप्रतिज्ञा तु प्रतिज्ञापदानां वक्तृनिर्वाह्योपलक्षणपरत्वम्; प्रतिषेधपदेन

---

१. स्वरूपस्याक्षतेः ख।

दोषपरिजिहीर्षामूलकत्वदर्शनादुक्तिसंभवोत्तरकक्षापातित्वे दर्शिते । अपनयनमपलापः। वाद्यादिनिश्चितेऽपि व्यतिरेकज्ञानानुकूलो व्यापारः, सन्न्यासोऽधारणमप्रकाशीकरणम् । अन्यथा हेत्वादिसन्न्यासस्य निग्रहस्थानान्तरत्वापत्तेः । न चोपलक्षणत्वं पक्षप्रतिज्ञापदाभ्यां निर्वाहृचोपस्थितेरावश्यकत्वात्तदेव तत्त्वम् । अनाकाङ्क्षया व्यवच्छेद्यसिद्धेः। तेन हेत्वादिसन्न्यासस्यान्तर्भावान्न विभागव्याघातः। विशेषोपादानं तु उदाहरणविशेषप्रदर्शनाय । यद्यप्युक्तापलापमात्रं नोक्तसन्न्यासः । त्वयेदमुक्तमित्यत्राव्याप्तेरनुवादादावतिव्याप्तेः । तथाप्युक्तविषयारोपेणोक्तदोषपरिहाराभिधानमुक्तसन्न्यासः । छले नोक्तविषयत्वारोपः, किन्तु तात्पर्यादौ । यद्वा यो येन रूपेण प्रतिपादितस्तस्य तेन रूपेणापलापः सः ।

ननु परोक्तासाधकतासाधने सन्न्यासेनैकत्वादिह आपद्यते न वा ? आद्ये तस्य सामर्थ्येऽसामर्थ्ये वा ? यथायथं दोषान्तरत्वं निर्दोषत्वं वा ? एवं हान्यादावपि । अत्रापलापेनासाधकतासाधनस्य स्वानभ्युपगतविषयत्वकथनेन सिद्धसाधनार्थान्तरयोरन्यतरप्रदर्शनं दोषान्तरेऽप्यपलापस्योपजीव्यत्वेनातिरेकः । सत्त्वे[ऽ]भावेंपराव [?] नैकान्तिकादावुक्ते तेन सहापलापस्य तत्रैवासङ्करः । अर्थान्तरादेस्तूपजीव्यतयैवास्यातिरेकः । तस्यापह्नवमनुद्भाव्य व्यवस्थापयितुमशक्यत्वात् । न चैवं तादर्थ्यमेवास्य । स्वतोऽप्यशक्तिसूचकत्वादित्येके । कथासमयबन्धकालाऽभ्युगतस्यार्थविशेषस्यापलापेऽस्यासङ्करः । आकरे तु सङ्कीर्णस्यैवोदाहरणमित्यन्ये । तथापि सन्न्यासं सन्न्यासान्तरेण परिहरतः किमुत्तरम् । सन्न्यासान्तरमेवेति गृहाण । अनवस्थाप्रसङ्गस्तवापि तुल्यः ।

ननु चानुन्मत्तस्य नोक्तापलापः संस्रवम्[1], [?] कश्चिदस्फूर्तिमांस्तथा कुर्वन्नपि कथं न गृह्यताम् । अन्यथा कपोलवादित्रादेरपि कादाचित्तादृशेन करणात्तदपि निग्रहोन्नायकत्वेन गण्येतेति कीर्तिः । तन्न, अपह्नवनिर्वाहेणोक्तदूषणपरिहारवत् कपोलवादित्रादिना तदसम्भवात् ।

संन्यासोऽपि पञ्चविधः—प्रतिपादनापलापात्, यथा क एवमाहेति । प्रकारापलापाद्वा, यथा परपक्षोऽयं मयोक्त इति । स्ववचने परकर्तृकत्वसञ्चाराद्वा, यथा स्वोक्त एव त्वयेदमुक्तमिति । परोक्तौ स्वकर्तृकत्वसञ्चाराद्वा, यथा परोक्त एव मयेदमुक्तमिति । पञ्चमस्तु यथाऽनुक्त एव मयेदमुक्तमिति । न च प्रतिपादनापलापपरत्वेन प्रथमपक्ष एवास्यान्तर्भावः । सर्वेषां प्रतिपादनापलापपरत्वेन प्रथम एवान्तर्भावापत्तेः । पञ्चविधोऽप्ययं विशेषणादिसङ्क्रमाद् बहुप्रकारकः वादे चायं न बुद्धिपूर्वकः । तत्त्वबुभुत्सुतयास्थ[स्ख]लितसंग्रहणाभावात् । यदसद्विषयत्वादिकमस्य हानिवत् । अत्रानुवादाप्रेक्षणं दूषणोपरूढं नापलपेदिति रहस्यम् ।५।२।५।

---

१. सम्भवति.

[हेत्वन्तरलक्षणम्]

हेतुसन्न्यासस्य पूर्वेण संग्रहादस्य हेतुनिरूप्यत्वसंगत्या सूत्रम्—

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्[1] ।५।२।६।**

अविशेषोक्तहेतुपदस्य न्यायावयवविशेषवाचकतयोपलक्षणत्वस्य न्याय्यत्वात् । तेन हेतौ प्रयोजकभागे दृष्टान्तावपि अविशेषोक्ते विशेषणाभाववत्युक्ते प्रतिवादिना प्रतिषिद्धे-दूषिते । तदुद्दिधीर्षयाऽन्यथोक्तेरसम्भवात् । विशेषमिच्छत इतीच्छाजन्यं वचनपर्यन्तमभिप्रेतम् । परेण परेच्छाया दुरूहत्वात् । इच्छामात्रेण निग्रहस्थानत्वाभावाच्च । तेनोक्तस्य साधकस्य स्वावसरेऽनुक्तविशेषणवत्तयाऽभिधानं हेत्वन्तरमिति लक्षणम् ।

न च विशेष्यान्तरवचनेऽव्यापकमिदमिति विशेषपदं विशेषणविशेष्यपरतया व्याख्येयम् । विशेषणपदस्योपरञ्जकपरत्वात् विशेष्यस्यापि विशेषणोपरञ्जकत्वादिति सम्प्रदायविदः । वस्तुतः परोक्तदोषोद्धाराय प्रागनुक्तसाधकभागाभिधानं हेत्वन्तरमिति विवक्षितमिति ।

तदिदं चतुर्विधम्—हेतुविशेषणात्, उदाहरणप्रयोजकभागविशेषणात्, उपनयविशेषणात्, दूषणविशेषणाच्च । यद्यपि दूषणविशेषणमपि प्रागुक्तप्रकार एवान्तर्भवति, तथाप्यनेकादिदूषणं न हेतुत्वेन प्रयुज्यत इति पृथगुक्तं, शोनुबन्ध्याद्या ।

तत्राद्यं यथा —शब्दोऽनित्यः अस्मदादिबाह्यकरणप्रत्यक्षत्वादित्युक्ते, अनैकान्तिकतया च प्रत्युक्ते सामान्यवत्त्वे सतीति विशेषणात् । द्वितीयं यथा—शब्दोऽनित्यः सामान्यवत्त्वेसत्यस्मदादिबाह्यकरणप्रत्यक्षत्वात् । यदस्मदादिबाह्यकरणप्रत्यक्षं तदनित्यमित्युक्ते, प्रयोजकभागन्यूनतया च प्रत्युक्ते सामान्यवत्त्वे सतीति विशेषणात् । तृतीयं यथा—तत्रैवास्मदादिबाह्यकरणग्राह्यश्चायमित्युक्ते तथैव प्रत्युक्ते सामान्यवत्त्वे सतीति विशेषणात् । चतुर्थं यथा—हेतौ प्रयुक्तेऽसाधकोऽयं, सपक्षे सत्त्वादनित्यत्वे प्रमेयत्ववदिति प्रत्युक्ते स्वाव्याघातकत्वेन जात्युत्तरतया च परिहृते विपक्षगतत्वे सतीति विशेषणात् । साधारणानैकान्तिक[ता] एवं विपक्षव्यावृत्तत्वादित्युक्ते तथैव प्रत्युक्ते सपक्षव्यावृत्तत्वे सतीति विशेषणा[त्] एवं सन्दिग्धत्वादित्युक्ते। सिद्धतया च प्रत्युक्ते व्याप्यत्वेनेति विशेषणात् । सन्दिग्धासिद्धत्वे एवं प्रत्यभिज्ञानबाधितत्वादित्युक्ते लूनपुनर्जातकेशादिना च प्रत्युक्तेऽविसंवादीति विशेषणाद्बाध इत्याद्यूह्यम् । एतच्च स्थापनागतं वा विशेषितत्वं, परोक्तदोषप्रतीकारे हेत्वन्तरमेव निग्रहस्थानम् ।

यत्र तु विशेषितत्वेऽपि पूर्वदोषता[दवस्थ्यम्]तत्र स्थापनायां हेत्वाभासः, दूषणे तु निरनुयोज्यानुयोग इति ताभ्यामेव गतार्थता यद्यपि, तथापि हेत्वन्तरमेवोद्भाव्यम्;

---

१. सूत्रमिदं "ख" पुस्तके नास्ति ।

उपजीव्यत्वात् । विशेषणाभिधानेनाविशिष्टासामर्थ्यस्य वादिस्वीकृतत्वेन सिद्धत्वाच्च । हेत्वाभासनिरनुयोज्यानुयोगयोश्च साध्यत्वात् । साध्यत्वं च यद्यपि न प्रतिपत्तिसंभावना, हेत्वन्तरेऽपि तुल्यत्वात् । नाप्युपजीवकत्वम् । न हि हेतावविशेषिते विशेषिते वा पूर्वोक्तदोषो हेत्वन्तरमुपजीवति । तथाप्युभयवाद्यसंप्रतिपन्नत्वमेव साध्यत्वम् । तद्यथा स्थापनायामप्रतीकारे हेत्वाभासः शब्दोऽनित्यो बाह्यकरण[मात्र] प्रत्यक्षत्वादियुक्ते, हेतुत्वेनाभिमतायामनित्यत्वासाधकः सव्यभिचारत्वात्, प्रमेयत्ववदिति प्रत्युक्ते योगिप्रत्यक्षपरमाणुमात्रगतव्यभिचारव्यावृत्तयेऽस्मादादीति । मात्रपदोपादान्ते[1] सामान्यादौ तथैव सव्यभिचारित्वं, ततश्च सामान्यवत्त्वे सतीत्यपि वक्तव्यम् । तथापि येनोदाहरणेन सव्यभिचारत्वं परेणोद्भावितं तत्तेन समाहितमिति चेत्[2] सव्यभिचारत्वादसाधकमित्यस्य दूषणवाक्यस्यापरिहारात् । दूषणत्वे प्रतीकारे निरनुयोज्यानुयोगो यथाऽसिद्धत्वासाधक इत्युक्ते नायमसिद्धः, स्वरूपस्य प्रामाणिकत्वादितिच्छलम् । निरनुयोज्यानुयोगः व्याप्तिपक्षधर्मतावैशिष्ट्याभावो ह्यसिद्धिः । तद्वैशिष्टयं च न विशेष्यमात्राधीनमिति ।

ननु हेत्वन्तरं परोक्तदूषणोद्धारसमर्थं न वा । आद्ये न निग्रहस्थानत्वम् । अन्त्ये निरनुयोज्यानुयोगेन गतार्थता । मैवं, यत्र नियमबन्धसमये कृतकत्वाच्छब्दाऽनित्यत्वमित्यभिधाय पश्चात् सभाक्षोभादिना सामान्यवत्त्वे सत्यस्मदादिग्राह्यचेन्द्रियग्राह्यत्वादित्यादिना स्थापनामेव स्थापयति तत्रास्यासाङ्कर्यात् प्रतिज्ञान्तरवदस्य परिकरशुद्धिः ।५।२।६।

[निग्रहस्थानचतुष्कलक्षणप्रकरणम्]

[अर्थान्तरलक्षणम्]

सम्प्रति प्रकृतोपयोग्यर्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कलक्षणप्रकरणम् । पूर्वापेक्षया हेत्वहेतुमद्भावो वाऽन्तरसङ्गतिः । अस्य प्रकृतोपयोगिव्यतिरेकज्ञापकतया तद्व्युत्पादकपूर्वापेक्षत्वात् सूत्रम्—

**प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ।५।२।७।**

ननु चार्थान्तरमिति यदि लक्ष्यनिर्देशः, तदा पञ्चम्यनुपपत्तिः । अवधिमदनिर्देशात् । न च हेतौ पञ्चमी, हेतुत्वस्यायोग्यत्वात् । अथावधिमदभिधानं तदा न लक्ष्यनिर्देशः । न चाप्रतिसंबद्धार्थमित्यनेनान्वयः । अप्रतिसम्बद्धार्थस्य सावधित्वाभावात् । प्रकृतार्थेन सहासम्बद्धार्थमित्यन्वये सहार्थे तृतीयापत्तेः । संबन्धिमात्रविवक्षायां षष्ठ्यापत्तेः । न च नञर्थस्य सावधित्वम्, अवधित्वप्रतियोगित्वयोर्भेदात् । अन्यथा घटान्नेति प्रतीत्यापत्तेः । पृथक्त्वोच्छेदापत्तेश्च । नञा तदुत्तरपदेन वा पृथक्त्वस्य चात्रोपस्थानाभावात् ।

---

१. मात्रपदानुपादाने प्रामाणिक पाठः प्रतिभाति ।

२. न इति ख ।

मैवम्, अन्यदित्यध्याहारात् पञ्चम्युपपत्तेः । यद्वा लक्ष्यपदावृत्तेः पञ्चम्युपपत्तिः । अध्याहारापेक्षया वृत्तेर्लघुत्वात् । अन्यारादिति सूत्रेऽन्तरपदस्यान्यपर्यायत्वेन वृत्तिकृता दर्शितत्वात् । ल्यब्लोपे वा पञ्चमी । प्रकृतमर्थमनपेक्ष्येत्यर्थः ।

ननु ल्यबर्थे पञ्चम्या न शक्तिः, अन[न्य]लभ्यत्वात् । न लक्षणा, विभक्तौ लक्षणाऽव्युत्पत्तेः, व्यत्ययानुशासनवैयर्थ्यात् । अथ कर्ममात्रे पञ्चमी, ल्यबर्थस्य चाध्याहारः । अन्वयव्यतिरेकाभ्यां ल्यबर्थस्याध्याहार एव कर्मणि पञ्चमी व्युत्पन्नेति न पदान्तरसमभिव्याहृताया अपि पञ्चम्यास्तदर्थत्वम् । न ल्यबर्थः पञ्चमी वाच्यः । कर्माध्याह्रियत इत्येव किन्न स्यादिति वाच्यम् । [यदि] प्रथमातिरिक्तविभक्तेरन्वयप्रकारवाचित्वादित्युच्यते, तर्ह्यत्रापि पक्षाध्याहार इति न प्राक्तनपक्षाद्भेदः ।

अत्राहुः ल्यबध्याहारो[ऽ]नादिः, अन्यस्त्वाधुनिक इत्येव पूर्वस्माद्भेदः । ल्यबर्थे पञ्चम्याः शक्तिरेव अन्यलभ्यत्वस्य दुरूपपादत्वात् । अवध्यवधिमद्भावे पञ्चमी । अवधेः पञ्चमीति चन्द्रगोमि सूत्रादिति केचित् ।

यद्यपि वचनं विशेष्यतया सूत्रे न श्रूयते, तथाप्यप्रतिसम्बद्धो[ऽ]ननुरूपसंबद्धोऽर्थो यस्येति बहुव्रीहौ वचनस्यान्यपदार्थस्यानुपदसम्बन्धितयोपस्थितेः । तथा च प्रकृतादन्याभिधानमर्थान्तरम्, अन्यत्वञ्चानुरूपसाधनदूषणसंबद्धार्थ[अ]नुपदर्शनमिति सूत्रार्थः ।

ननु साधनस्य प्रकृतत्वं न तावद्विप्रतिपत्तिविषयसाध्यमात्रसाधकत्वम् । पर्वतोऽग्निमानिति प्रतिज्ञाय [यां]पर्वतोऽग्निश्च क्वचित् प्रत्यक्षः महत्त्वे सत्युद्भूतरूपवत्त्वादित्यादेरपि प्रकृतत्वप्रसङ्गात् । नापि (?) पक्षसाध्यसंसर्गस्याप्रसिद्धेश्च । अननुरूपसंबद्धञ्च नासाधकत्वम्, हेत्वाभासातिव्याप्तेः । नापि प्रकृतानुपयोगित्वं स्तोत्रपाठादेः पापक्षयद्वाराऽदृष्टद्वारा वा प्रकृतोपयोगिनोप्यर्थान्तरत्वात् । अत एव प्रकृतानुपयोगित्वेनाभिधानं तदिति परास्तम् । अशक्तिनिगूहनार्थतया प्रकृतोपयोगित्वेनाभिधानात् । प्रकृतानुपयोगीदमित्यभिधानाच्च । अन्यथा कतमं निग्रहस्थानम्, नाधिकमकृतकर्तव्यत्वात् । अपार्थकादेश्चाभावात् । नाप्यनुद्देश्यत्वम्, हेतुपदादित्युत्पादनस्यानर्थान्तरतापत्तेः । तस्याप्युद्देश्यत्वात् ।

अथ प्रकृतानङ्गाभिधानं तथा, प्रकृतत्वञ्च वचनीयतया स्थेयं संमतिविषयत्वमिति चेन्न, हेत्वाभासाद्यभिधानेऽतिव्याप्तेः । प्रकृतशब्दाद्युक्तं कथता[क]पा[वा]द्याभिघातादिव्युत्पादनाव्याप्तेश्च ।

मैवम्; प्रतिपाद्यत्वेन कथाप्रयोजकसमयविषयार्थसंबद्धानुपदर्शकं वचनमर्थान्तरमिति विवक्षितत्वात् । हेत्वाभासाद्युद्भावने तु तथाभूतसाध्यसाधनसंबन्धाभिधानमस्त्येवेति नातिव्याप्तिः । केचित् सिद्धसाधनमर्थान्तरेऽन्तर्भावयन्ति, विप्रतिपत्त्य[त्ति]विषयीभूतासाधनत्वात् ।

अथ सिद्धसाधनं न दोषः । तद्धि न सिद्धस्यैव साधनम्, अंशतः सिद्धसाधनाव्यापनात् । नापि सिद्धस्याऽपि साधनं, तस्य सर्वत्र भावादिति चेन्न, यत्सिद्धिमन्तरेण विप्रतिपत्तिविषयो न सिद्ध्यति, तस्मादन्यस्य सिद्धस्य साधनमिति विवक्षितत्वात् । तन्न, सिद्धसाधनस्येच्छाविषयत्वावच्छेदकरूपवत् सिद्धावेव दोषत्वात् । तत्र चानुमितिकारणपक्षधर्मताविघटकतया हेत्वाभासत्वस्यैवोचितत्वात् । तत्त्वेऽर्थमिति[1] कारणविघटकत्वस्य तत्र[न्त्र]त्वात्, अनैकान्तिकवत् ।

तच्चतुर्विधम्—स्वमतरूपपरमतरूपोभयरूपानुभयरूपभेदात् । क्रमेण यथा—शब्दोऽनित्यः कार्यत्वादैन्द्रियकत्वाद्वेति । सदसत्प्रयोगे, गुणश्च शब्दः, स चाकाशस्य तदैवोपाधिवशाच्छ्रोत्रम्, तेन चायं गृह्यते । समवायादित्यादि यथा[।]तथैवोपक्रम्य शब्दो द्रव्यं, संयोगग्राह्या[ह्यो]नित्यश्चेत्यादि । यथा[।]तथैवोपक्रम्यानुमान गम्यमस्यानित्यत्वम् । अनुमानञ्च प्रमाणम् । तच्चतुर्विधम्, षड्विधञ्च किञ्चित् सत्तामात्रेण गमयति, किञ्चिच्च ज्ञातं सदित्यादि यथा, तथैवोपक्रम्य हेतुरयम् । हेतुश्च हिनोतेर्धातोस्तुनि प्रत्यये प्रकृते कृदन्तं पदम् । पदत्वञ्च शाब्दज्ञानाजन्यशाब्दज्ञानकारणान्वयप्रतियोगिस्मरणजनकतावच्छेदकरूपवत्त्वम्, सङ्गत्वं[सङ्गतिमत्त्वं]वा ।

पदं चतुर्विधम्—नामाख्यातोपसर्गनिपातभेदात् । तत्र भिन्न-भिन्नक्रियान्वये सति भिद्यमानरूपशब्दत्वं नामत्वम् । नहि यथा वृक्षः तिष्ठति, वृक्षं पश्यति, वृक्षेण चन्द्रमसं पश्यतीत्यत्र क्रियाविशेषयोगाद्रूपाणि भिद्यन्ते तथाव्या[ह्या]ख्यातादाविति, किन्त्वेक रूपतैव । चादेस्तु चेतन[?]समुच्चिनोतीत्यादौ स्वपरतायां नामत्वमेव । साक्षात्क्रियायोग्यार्थोपस्थापकशब्दत्वं वा विभक्त्यादीनां त्वन्वयप्रकारोपस्थापकत्वेन तदनुपस्थापकत्वात् । साक्षादिति निपातव्यावृत्त्यर्थम् । तस्येतरविशेषकत्वेन नामान्वयात् ।

आख्यातत्वन्तु न कालकारकसंख्याविशिष्टक्रियाभिधायित्वम् । कालवाचितया कारकसंख्यानभिधायकतया च यजेत, अप्यते[?]त्याद्यप्राप्तेः । नापि धात्वर्थाभिधायित्वम्, पाकस्त्याग इत्यादावतिव्याप्तेः- परस्पराश्रयाच्च । धात्वर्थस्या[ख्या]तार्थनिरूपणं विना निरूपयितुमशक्यत्वात् । आख्याताभिधेयकालान्वयगमनयोग्यतार्थोपस्थापकपदस्य धातुत्वात् । आख्यातस्य च धात्वर्थनिरूप्यत्वात् । धातावेवातिव्याप्तेश्च तस्य धात्वर्थाभिधायित्वात् ।

अथ साध्योपरक्तप्रधानीभूतवचना[न]वाचकपदत्वं तत् । न च 'वाक्य' मित्यत्रातिव्याप्तिः । तत्र भावनाया उपसर्जनत्वात् । नापि भावनादिपदेऽतिव्याप्तिः । तत्र साध्योपरागाभावादिति चेन्न, साध्योपरक्तभावनेत्यादिष्वतिव्याप्तेः[2] । समासो वाक्यं न पदमिति चेत्, तर्हि पचतीत्याद्यपि वाक्यमेव । तत्र साध्यस्य धातुनाऽभिधानम्; भावनायाश्च[आ]ख्यातेनेति । साध्योपरागो नाख्याताभिधेयः ।

१. अनुमिति ।
२. अतिव्याप्तिः ख ।

मैवम्, साध्योपरक्तभावनेत्यादिपदेभ्यः प्रत्ययार्थविशिष्टधात्वर्थस्याप्रतीतेः। नामभिन्नभावनाभिधायिपदत्वं वा आख्यातत्वम्। न च विभक्त्यादेव संग्रहाद्विभागन्यूनत्वं शाब्दज्ञानान्वयप्रकारोपस्थापकत्वस्य विभक्तिसाधारणस्याख्यातत्वस्य विवक्षितत्वात्। न चात्र विभागः भाष्यस्योदाहरणमात्रप्रदर्शनपरत्वात्। धातोः सुपाञ्च विद्यमानत्वात्। नदीवृक्षादिवदाख्यातादिकमपि व्याकरणपरिभाषाशास्त्रव्यवहारलाघवायेत्यन्ये। क्रियाकर्मकर्तृसमुदायाऽभिधायी शब्द आख्यातमित्यपरे। तन्न, पाक इत्यादेर्नाम्नोऽपि तत् समुदायाऽभिधायित्वादसिद्धेः, आक्षेपाद[दि]लब्धयोः कर्तृकर्मणोराख्यात[ता]वाच्यत्वात्।

ननु कर्तृकर्मणी न कार[क]वाच्ये, तेन वाच्यगामिनी संख्येति नियमात्तदन्वयनियमः स्यात्। अन्यथाऽऽक्षिप्तसंख्येयमात्रान्वयनियमो न स्यात्। अथ संख्येयमात्रसाकांक्षाऽपि संख्या भावे[भाव]नान्वयिनैवान्वेति। एकप्रत्ययोपात्तत्वप्रत्यासत्तेरन्तरङ्गत्वात्। भावना च व्यापारत्वेन शुद्धं प्रातिपदिकमकाङ्क्षति न कर्मकरणादिद्वितीयादिना, व्यापारवत्त्वेनोपस्थितेः। एवं कर्माद्यपि न व्यापारमाकाङ्क्षति। ततः प्रथमानिर्दिष्टेनैव भावनान्वयः। प्रातिपदिकस्यापि क्रियान्वयार्थं व्यापारकांक्षितत्वात्। शुद्धश्चाग्निना चैत्रः तण्डुलान् पचतीत्यत्र कर्ता, चैत्रेण पच्यन्ते तण्डुला इत्यत्र च कर्म, ततस्तत्रैवान्वय इति चेत्।

न, चैत्रः तण्डुलान् पचतीत्यत्राह[त्य]भावनान्वयश्चैत्रे संभवत्याश्रयत्वात्, चैत्रेण पच्यन्ते तण्डुला इत्यत्र तु तण्डुलेषु न भावनान्वयः सम्भवी, स हि विषयत्वेन वा स्यादाश्रयत्वेन वा। नाद्यः यत्नस्य विक्लित्यनुकूलव्यापारविषयत्वात्। विषयत्वेनान्वये वा चैत्रः तण्डुलान् पचतीत्यत्रापि विषयत्वेन भावान्वये[1] तद्गतैव संख्या स्यात्। नान्त्यः, अचेतनत्वेन यत्नस्य तत्रावृत्तेः। तर्हि चैत्रेण तत्रैव यत्नेऽन्वय इति चेन्न, तस्य तृतीयान्वययत्नाऽवरुद्धस्य यत्नाऽन्तरानाकाङ्क्षत्वात्। एवञ्च तत्रान्वितैव भावनेति कथं तत्र संख्यान्वयनियमः, कथञ्चाचेतनेषु भावनान्वयात् संख्यान्वयनियमः?

उच्यते। यद्यप्युभयत्र चैत्रः कर्ता, तण्डुलाः कर्म, तथापि यद्यत्र यत्नस्य विशेष्यं, तत्र संख्याऽन्वयः। तथा हि चैत्रः तण्डुलान् पचतीत्यत्र तण्डुलवृत्तिफलजनकव्यापारजनकयत्नाश्रयश्चैत्र इति प्रतीतेः। स यत्नस्य विशेष्यः। चैत्रेण तण्डुलाः पच्यन्त इत्यत्र चैत्रवृत्तियत्नजन्यव्यापारजन्यफलाश्रयास्तण्डुला इति प्रतीतेर्यत्नस्य परम्परया तण्डुलाः विशेष्याः। अचेतने रथो ग्रामं गच्छतीत्यत्र ग्रामवृत्तिफलजनकव्यापाराश्रयो रथः प्रतीयते। रथेन गम्यते ग्राम इत्यत्र रथवृत्तिव्यापारजन्यफलाश्रयो ग्राम इति तत्रापि विशेष्ये संख्यान्वयः। तथापि क्वचिदव्यापारस्य विशेष्येण संख्या-

---

१. भावनान्वये।

न्वये नियामकं नानुगतमिति चेन्न, आख्याततात्पर्यविषयत्वस्यैव विशेष्येण संख्यान्वये-[ऽ]नुगमकत्वात् । स च विषयो यत्नो व्यापारो वेति । तथापि चैत्रेण स्व[सु]प्यत इत्यत्र न चैत्रो भावनाविशेष्यः । तृतीयान्तवाच्यत्वेन तस्य व्यापारान्तरानाकाङ्क्ष-त्वात् । कर्म च तत्र नास्त्येवेति चेत्, न; धात्वर्थस्ये[स्यै] व तत्र भावनाविशेष्यत्वात् । तच्च फलत्वेन विषयत्वेन वेति तत्रैव संख्यान्वयः । द्विवचनबहुवचनयोश्च तत्रासाधु-त्वमेव । इदमेव च कर्तृ[र्तुः]कर्मणश्चाक्षेपलयभ्यत्वं, यद् भावनाविशेष्यत्वे सति प्रथमान्तोपस्थाप्यत्वम्, न तु संख्यालिङ्गकानुमितिविषयत्वम् । अनुमित्या सन्धेय-[विधेय] मात्रगतत्वेन संख्याप्रतीतेः ।

अथवा कर्तृगता संख्या वाच्या । तत्र कर्ता तदन्वयः प्रतीयते कर्तृगतैव संख्या क्व वाच्येति चेत्, कर्ता क्व वाच्य इति तुल्यम् । यत्र तद्गता प्रतीयत इति चेन्न, अन्योन्याश्रयात् । कर्तुर्वाच्यत्वेन तद्गतसंख्याधीः, कर्तृगतसंख्याप्रतीत्या कर्तु-र्वाच्यतेति । यत्राख्यातेन कर्तुर्विवक्षा तत्र कर्ता वाच्य इति चेत्, कर्तृगतसंख्या-विवक्षा यत्र, तत्र सा वाच्येति तुल्यम् । एवं कर्माऽपि न शक्यम्, किन्तु तद्गता संख्या । "कर्तृकर्मणी न कारकवाच्ये" इत्यस्यायमर्थः, तद्गतसंख्या वाच्येति । यत्रान्वयः प्रकृत्यर्थगतस्वार्थबोधकत्वम्, तिङः प्रथमान्तपदार्थगतस्वार्थसंख्याबोधक-त्वमिति व्युपत्तिश्च तत्र स्वभावत्वम्, तच्च फलोन्नेयम् । प्रथमान्तपदार्थः कर्ता कर्म वा । अत एव चैत्रेण सुप्यत इत्यत्र प्रथमान्तपदाभावान्न संख्याऽन्वयः । स्वापस्य द्वित्व-बहुत्वेऽपि द्विवचनबहुवचनयोरभावात् । सुप्यत इत्येव प्रयोगात् । अतः स्वापमात्राव-गमादाख्यातार्थयत्नसंख्ययोर[न]न्वयेनाख्यातप्रयोगमात्रं साधु, तिङं विना धातोः केवलस्यासाधुत्वात् । अतो न संख्यान्वयानुरोधेन कर्तृकर्मणी न कार [क] वाच्ये ।

अथ कर्ता आख्यातवाच्यः, चैत्रः पचतीति[1] सामानाधिकरण्यात् । अन्यथा नामाख्यातयोर्भिन्नप्रवृत्तिनिमित्तत्वेप्येकत्र वृत्त्यभावेन सामानाधिकरण्यं न स्यादिति चेत्, न, नीलपटः, चैत्रः पचति, तण्डुलाः पच्यन्त इत्यादौ नाम्नोर्धात्वाख्यातयोचै-[श्चै]कसंख्यावाचकत्वमेव हि शाब्दं सामानाधिकरण्यम्, न तु भिन्नप्रवृत्तिनिमित्त-योरेकस्मिन्नर्थे वृत्तिः । गौरवात् । ओदनकामः पचेतेत्यादौ व्यभिचाराच्च । आख्यातस्य कृतिशब्दस्य नामसामानाधिकरण्यम्, तयोरेकसंख्याभिधायकत्वात् । नन्वेककर्तृवाचकत्वेन तत्रापि कर्तुर्वाच्यत्वेनेष्टसाधनत्वेनऽप्रवृत्तिः, तस्यासाध्यत्वात् । अयोग्यतया कर्तारं विहाय कृतिविषये पाके पाकविषयककृतौ वेष्टसाधनतान्वये कर्तुरन्वयादप्रतीतेश्च नाभिधेयत्वम् ।

अथ पचतीत्यस्य 'पाकविषयकयत्नवान्' इति विवरणात्, कर्ता वाच्य इति

---

१. पठति ख

चेन्न, द्वन्द्वादिसमासस्य विग्रहेण विवरणेऽपि विग्रहार्थे शक्त्यभावेन व्यभिचारात्, कर्तुरन्यलभ्यत्वेनावाच्यत्वव्यवस्थितौ विवरणस्य तात्पर्यविषयककथकत्वात् । कर्तरि शक्तिभ्रममूलकत्वाद्वा, तथापि कर्तृकर्मणी न कार[क]वाच्ये तेनाभिहिते कर्तरि कर्मणि चाभिहिताधिकारार्थशिष्टा विभक्तिर्न भवति, किन्तु प्रथमैव । सकारेण तयोरनभिधाने च चैत्रेण पचति तण्डुलान्, चैत्रेण पच्यन्ते तण्डुलानीत्याद्यपि स्यादिति चेन्न, कर्तृकर्मगतसंख्यानभिधानानभिधानाभ्यामेवाभिहितानभिहितकार्योपपत्तेः, तादृशप्रयोगस्यासाधुत्वाच्च । साधुत्वे सत्यनुशासनं, नत्वनुशासनानुरोधेन साधुत्वम्, ग्रामगमनादौ साधुत्वापत्तेरिति ।

उपसर्गास्तु उपसृज्यमानाः समीपे धातोः प्राक् प्रयुज्यमानाः । तत्त्वञ्च प्रपराद्यन्यतमत्वम्,[1] अर्थविशेषणत्वात् । किन्त्वभियुक्तानां तथा परिभाषास्पन्दत्वम् । ते च निपातविशेषा अपि गोवृषन्यायेनात्र पृथगुक्ताः । ते च द्योतकाः, न वाचकाः । द्योतकत्वञ्च धातोरर्थविशेषे तात्पर्यग्राहकत्वम् । तदुपसर्जनेन च शक्तिर्वा, न तु धात्वर्थाभिधायकत्वम्, पौनरुक्त्यापत्तेः ।

ननु प्रजयतीत्यत्र प्रकर्षस्य विजयत इत्यादावतिशयस्यागच्छतीत्यादावा[भि] मुख्यसामीप्ययोः प्रतीतावुपसर्गान्वयाद्यर्थविधानात् पदान्तरवदत्रापि शक्तिः । न च प्रतिष्ठत इत्यत्र गतिर्न स्यात्, प्रशब्दस्य प्रकर्षवाचितयाऽतिशयेनागमनप्रतीतिप्रसङ्गादिति वाच्यम् । तत्र प्रशब्दस्य धात्वर्थविरुद्धार्थत्वात्, तस्य च गमनत्वात् । धातोरिव तस्याप्यनेकार्थत्वात् । धातोः सार्थकत्वं क्लृप्तम्, अतस्तस्यानेकार्थत्वं युक्तम्, नोपसर्गस्येति चेन्न, धातूनां बहुत्वान्न प्रकर्षवाचित्वं, किन्तु प्रशब्दस्यै लाघवादिति तस्यापि सार्थकत्वात् । धातोरनेकार्थत्वमुक्तं तदभियुक्तैः, नोपसर्गस्येति चेत्तर्हि धातोः नानार्थतायामुपसर्गविशेषार्थविधानं नार्थविशेषे स्यात् । अक्षादिशब्दे तददर्शनात् ।

तदाहुः—

उपसर्गेण हि धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहार-परिहारवत् ॥ इति ।

उपसर्गस्यापि शक्तत्वे धात्वर्थविधानं न स्यादिति चेन्न, साधुत्वार्थं हि तत्र तदर्थविधानं, तेन विना त्वप्रयोगात् । न तु शक्तौ, धातोस्तु शक्तावेव तदपेक्षेति वैषम्यम् ।

---

१. न प्रपराद्यन्यतमत्वम् ख.

अथ प्रजयत्यभ्यागच्छतीत्यादौ सामान्यवाचकधातोरेव प्रकर्षसामीप्यादि-विशिष्टस्य विशेषस्योपस्थितिः। तात्पर्यग्राहकमात्रमुपसर्ग इति चेन्न, प्रकर्षादि-विशेषस्य लक्ष्यत्वेन तत्र लक्षणायां युगपद्वृत्तिद्वयापत्तेः। एतेनाभ्यागच्छतीत्यादौ सामीप्यादिविशिष्टधात्वर्थप्रतीतेर्वाचकत्वम्। प्रतिष्ठत इत्यादौ तु धातोरेव गमनार्थत्वम्। तात्पर्यग्राहकस्तु प्रशब्दः। अन्यथोपसर्गधात्वर्थयोर्विरोधेना[न]न्वयापत्तेः। एवञ्च "यत्र विरोधः तत्र द्योतकत्वम्, अन्यत्र तु वाचकत्वम्" इत्यपास्तम्। अगमनविरोधगमनस्यैव शब्दार्थत्वात्।

अथाख्यातार्थस्य धात्वर्थेनान्वयबोधात् प्रतिष्ठत इत्यत्र गमनं धात्वर्थ एव। प्रशब्दार्थत्वे भावनान्वयो न स्यात्। प्रकृतिप्रत्यययोः सम्भूयान्वयबोधकत्वादिति चेत्, प्रकर्षाभिमुख्यसामीप्यादेरुपसर्गवाच्यत्वे तद्विशिष्टधात्वर्थान्वयः सम्भवत्येव भावनायाः। ओदनं पचतीत्यौदनविषयकपाकान्वयवत्।

उच्यते। प्रोत्तरस्थत्वेन तिष्ठतेर्गमने शक्तिरिति प्रशब्दः शक्त्यवच्छेदको, न तु शक्त इत्यौपसन्दानिकी शक्तिरेव द्योतकत्वम्। उपसर्गस्य हि शक्त्यवच्छेदकत्वं, न तु शक्तत्वम्, गौरवात्। तथा च प्रोत्तरजित्वेन प्रकृष्टजये शक्तिः एवं हि क्लृप्तविशेष्य-शक्तेर्विशेषणविषयत्वमात्रं कल्प्यते। अन्यथा शक्त्यन्तरमेव।

न च जिपूर्वप्रत्वेन तत्र शक्तिरस्त्विति वाच्यम्। धात्ववाच्यत्वेन भावनानन्व-यप्रसङ्गात्। प्रतिष्ठत इत्यत्र प्रशब्दस्य शक्ततावच्छेदकत्वकल्पनत्वाच्च। अथवा प्रतिष्ठत इत्यत्र विरोधिलक्षणया धातोर्गमनोपस्थिति[स]त्वात्। [तात्]पर्यग्राहकः प्रशब्दः। अनन्यलभ्यस्य शब्दार्थत्वात्। प्रजयतीत्यादावपि विशेष्यवाचकस्य धातो-र्विशिष्टलक्षणैव। विशेष्याद्विशिष्टस्यान्यत्वात्। प्रादेस्तु तात्पर्यग्राहकत्वं विनाऽपि धातुतः प्रतीतिसम्भवे तत्कल्पनमनन्यलभ्यस्य शब्दार्थत्वात्। व्यति[1] स इत्यादौ तु लुप्तः स्मृतो धातुरेवार्थबोधकः। धातुलोपमजानतः तत्रार्थप्रतीत्यभावात्।

निपातत्वं तु समभिव्याहृतपरार्थविषयान्वयानुकूलोपस्थित्यजनकशाब्दधीजनक ज्ञानजनकपदत्वम्। च शब्दादीनां समभिव्याहृतपदार्थोपरक्तस्वार्थाभिधायकत्वात्। घटस्य समुच्चय इतिवत्, घटस्य चेत्याद्यप्रयोगाच्च। सर्वविभक्तिप्रयोगेष्वेकरूपत्वं वा तत्त्वम्, तथा परिभाषास्पदत्वं वा।

अर्थान्तरं च सदसत् प्रयोगे दोषं दृष्ट्वा झटिति समाधानमपश्यतस्तत्तिरो-धित्सयोक्तिसम्भवः।

ननु चार्थान्तरं परिपूर्णे वाक्ये चोद्भाव्येत, अपरिपूर्णे वा? नान्त्यं तत्र न्यूनेनैव निग्रहात्। तदनुद्भावने च पर्यनुयोज्योपेक्षणापत्तेः। आद्येऽप्यदुष्टे वाक्ये दुष्टे वा?

---

१, दीव्यति स इति वक्तव्ये।

आद्ये किमित्यर्थान्तरं, अवतारयेदित्युक्तिसम्भवः। दुष्टेऽपि दोषमुपेक्ष्य नार्थान्तरोद्भावनस्योपयोगः। प्रत्युत पर्यनुयोज्योपेक्षणमासादयेदित्यनवसर एवैतदुद्भावनस्य प्रयोजनाभावश्च। न हि प्रतिज्ञा तु वादिवदर्थान्तरोद्भावनेन पूर्वदोषः परिहृतो भवति; अन्यथा कपोलवादनमप्यवतारयेदिति।

मैवम्। स्वदोषस्य सतोऽसतो वा ज्ञातस्य तिरोधित्सयैतदुक्तिसम्भवात्। न च कपोलवादित्वतुल्यता। आकाङ्क्षा ह्युपेतत्वेनापाततः प्रतिपादकत्वात्। अर्थविधारणोत्तरं प्रकृतान्वयज्ञानात्। न चैवं कपोलवादित्वादाविति विशेषात्। अदुष्टेऽपि दुष्टत्वधिया तत्तिरोधित्सयैतदुद्भावनम्। नाप्यनवसरः, न्यूनादेस्तद्वादिन्युपरतवचसि दत्तावसरे चोद्भाव्यत्वात्। अन्यथा शब्दोऽनित्य इत्येतावदर्थोक्त एव न्यूनोद्भावनापत्तेः। अत एवामीषामुक्ति[1]समाप्तिग्राह्यत्वम्। न ह्यु[2][तू]च्यमानग्राह्यत्वं, [3]उक्तिदशायामेवोद्भाव्यत्वरूपमर्थान्तरं ह्युच्यमानग्राह्यम्,[4] तथा च संभेदेऽप्यनयोरेतदेवोद्भाव्यम्। ततोऽवसरासंकरादेवास्य ततो विशेषः। न चैवं न्यूनोपेक्षणे पर्यनुयोज्योपेक्षणापत्तिः। उद्भावनावसरे तदनुद्भावने तत्सङ्करात्[5]।

ननु सम्भेदेऽपि कथं तदेवोद्भाव्यम्। अर्थान्तरत्वनिश्चयदशायामुक्ति[6]समाप्तिग्राह्यमपि यत्नादिकं[7] निश्चीयत इति तस्यैवोद्भाव्यता, उभयसिद्धत्वात्। किञ्चान्तरमपि कथमुच्यमानग्राह्यम्, प्रकीर्णमभिधाय वादी यदि पश्चात् प्रकृतसङ्गतिं करोति तदा नार्थान्तरमिति सम्भावनायाः सुलभत्वात्। न च मध्यस्थानुवादात् प्रागुद्भाव्यत्वमेवोच्यमानग्राह्यत्वम्, न्यूनादेरपि तथात्व[8]विरोधाभावात्।

मैवम्, यत्रादुष्टे साधने[9] दुष्टत्वधियाऽर्थान्तरं वदति तत्रास्यासाङ्कर्यात्। यत्रवैत[यत्रैक]दैवोद्भाव्यमिति समयबन्धः, तत्रास्यावसरसम्भवात्।

ननु चार्थान्तरमर्थान्तरेण परिहरतः किमुत्तरम्? न तावदर्थान्तरमेव, तत्रापि

---

१. युक्ति ख।

२. न तु ख।

३. युक्ति ख।

४. तूच्यमान ख।

५. तत्सम्भवात् ख।

६. युक्ति ख।

७. न्यूनाधिकम् ख।

८. तथात्वे ख।

९. साधन ख।

पुनस्तदुद्भावनेनोन्मत्तकेलिप्रसङ्गात् । न च मूकीभवनमेवोचितम्, उत्कृष्टानुत्कृष्ट-व्यवस्थानुपपत्तिप्रसङ्गात् । प्रत्युत्तरस्यैवावष्टम्भविजयः स्यात् । पूर्वनिग्रहस्थानावच्छिन्नासु कथासु पश्चादुपन्यासः कथाबाह्य एव[1] मध्यस्थेन निग्रहस्थानोद्भावनेन कथाविच्छेदाः सर्वत्र[2] । अन्यथा सर्वत्र जल्पाकस्यैव वावष्टम्भविजयावधिः कथा-व्यवहारः स्यादिति ।५।२।७।

[निरर्थकलक्षणम्]

अथ निरूप्यत्वसङ्गत्या सूत्रम्—

**वर्णक्रमनिर्देशवन्निरर्थकम् ।५।२।८।**

अत्र निर्देशवदिति न मतुप्, एकाक्षरनिरर्थकाव्याप्तेः । घटादिपदेऽतिव्याप्तेश्च, तस्यापि वर्णक्रमनिर्देशवत्त्वात् । किन्तु सादृश्यवाचि वति प्रत्ययान्तम्, तेन यद्यपि सादृश्यमात्रमतिव्याप्तम्, तद्विशेषश्च दुर्वचः, तस्य च भेदनियतत्वात् वर्णक्रमनिर्देशात् । किन्त्वसादृश्यवाचि वति प्रत्ययान्तम्, तेन यद्यव्याप्तिः, तथाप्यवाचकत्वेन सादृश्यमात्रमविरुद्धम्[3], तेनावाचकपदसंयोगो निरर्थकमिति सूत्रार्थः ।

ननु यत्किञ्चिदवाचकत्वमतिव्याप्तम्, सर्वावाचकत्वमतिव्याप्तम् । सर्वावाचकत्वमप्येवं यत्किञ्चिदवाचकत्वञ्चासम्भवि । न चाभिप्रेतावाचकत्वं विवक्षितं, शास्त्रीयलक्षणावत् पदप्रयोगेष्वतिव्याप्तेः । नाप्युद्देश्यावाचकत्वम् । असामर्थ्यसंवरणीय[4]-द्राविडादिभाषया प्रत्यवस्थितस्योद्देश्यविशेषापरिचये निरर्थकोद्भावनानापत्तेः । कथं वा तन्निग्रहस्थानम्; अवाचकादप्यपभ्रंशादर्थप्रतीत्युत्पादनात् । न, वाचकत्वं व्याकरणादिसंस्कृतश्रोत्रग्राह्यजातिविशेषः, तदभावोऽवाचकत्वम्, सप्रतियोगिकवाचकत्वव्यवहारानापत्तेः । योग्यानुपलब्धेश्च व्यञ्जकाभावादनुपलब्धौ तेनैवान्यथासिद्धेः ।

अथ यतः पदार्थप्रतीतिर्न भवति, तदवाचकम्, अत एवापभ्रंशे न निग्रहः । ततः पदार्थप्रतीतेरुत्पत्तेरिति चेन्न, लिङ्गविभक्तिवचनादिविपर्यासाद्यव्यापनात् । नापि साधुत्वमेव वाचकत्वम्, तदभावेऽवाचकत्वम् । गौणलाक्षणिकयोरसाधुत्वापत्तेः[5] ।

१. एवम् ख ।
२. 'सर्वत्र' इति ख पुस्तके नास्ति ।
३. मात्रविरुद्धम् ख ।
४. सम्वरणाय ख ।
५. वैदिकगौणलाक्षणिकयोः ख ।

अप्राप्तकाले निराकार्यत्वाच्च । नाप्यसङ्केतितत्वम् । वादिगृहीतसङ्केतेनापभ्रंशेन वदतो निग्रहापत्तेः । नाप्यशक्तत्वम् । प्राकृतादिभाषया वदतः तदभावापत्तेः ।

मैवम् । उभयवादिगृहीतशक्ति[क]पदान्यपदप्रयो[ग]निरर्थकम् । व्याकरणादेः साधारणसङ्केतग्राहकतया संस्कृतमतेरेव कथाधिकारात् । शक्तिपदस्थाने वा वृत्तिपदं प्रक्षेप्यम् । तेन लौकिकलक्षणया[1] वदतस्तदभावः, स्वकल्पितलक्षणया च वदतस्तदापातो लभ्यते । प्रतिपादकतया वाच्यत्वेन कथासमयविषयान्यशब्दाभिधानं वा तदिति विवक्षितत्वात् । कथायां प्रतिपत्तेरुद्देश्यतयोभयसाधारणप्रतिपादकत्वाभिमतानामेव पदानां प्रयोगस्य युक्तत्वात् । प्रतिपादकत्वं च क्वचिदुभयसिद्धशक्त्या लक्षणया वा सिद्धशक्त्या लक्षणया वा । अत एवासाधारणभाषया यत्किञ्चिदभिधाने निग्रहः । अन्यथा प्रतिवादिन एव तत्राज्ञानं स्यात् ।

न च निरर्थकं प्रलापः कपोलवादित्ववत् प्रतीत्यनुत्पत्तेरविशेषादिति वाच्यम् । वस्तुतोऽप्रतिपादकस्यापि प्रतिपादकत्वेनाभिधानात् । कपोलवादित्वे तु तथात्वात् । चतुर्धाऽस्य प्रयोगसम्भवः । प्रमादात् । सभाक्षोभादिना तात्कालिकभ्रमात् । यथा अत्यन्तप्रसिद्धलिङ्गवचनविभक्तीनामन्यथाप्रयोगात् तथावाचकाभिमानात् स्थायिनो भ्रमात् । यथा वैयाकरणरूपमात्रवेद्यतया मन्दप्रसिद्धीनां कृत्तद्धितसमासाख्यातानां प्रयोगात् । क्वचिद् भूयस्तदर्थचिन्तनप्रभवसंस्कारदाढ्यर्चरूपादभ्यासात्, यथा संस्कृतमुपक्रम्यापभ्रंशवचनात् । क्वचिद्विकल्पितशेषोक्तेः । यथार्थपरत्वशब्दपरत्वनिराकरणे सति वाङ्मात्रं वा भवतोच्चरितं प्रकृतार्थार्थितैवच्छब्दप्रतिपत्तये[2] । अत एवाहुः—सर्वविकल्पभानाशेषेऽन्यत्वेति विकल्पसम्भवेन निरसनीयम् । अन्यथा यावद्विकल्पितप्रकारानभ्युपगमेन प्रकारान्तरमस्ति, तथापि प्रमादपदेनाकृतिगणतया तस्याप्यभिधानमित्याहुः ।

ननु लिङ्गादिविपर्यासापभ्रंशादिवचनं निग्रहस्थानम् । एवमप्यर्थप्रतीतेः शब्दप्रयोगस्य तावन्मात्रार्थत्वात् । अथ मीमांसादिकं प्रति वाचकापभ्रंशविभागः सिद्ध एवेति चेन्न, तस्य धर्ममात्रोत्पत्तावेवोपभोगात्, न तु प्रतिपादकत्वेऽपि । मैवम्, यत्र हि कथायां पूर्वं वाचकैरेव वक्तव्यमिति समयबन्धः क्रियते तमतिक्रम्य वदतः कथं न निग्रहः । समयज्ञानोपायाश्च व्याकरणादय उभयसिद्धाः प्रागेव कथाया इति न तस्य दुरूहत्वम् । न चैवमपभ्रंशानामवाचकत्वे ततोऽर्थधीर्न स्यात् । तदुपायस्य प्राप्तकाले वक्ष्यमाणत्वात् । तस्मात् साधारणैरेव पदैर्वाच्यमिति रहस्यम् ।५।२।८।

---

१. तेनालौकिका ख ।

२. प्रकृतार्थार्थितैरच्छब्द ख.

[अविज्ञातार्थलक्षणम्]

निरर्थकवचनस्यार्थनिरूप्यत्वादस्य च सार्थकत्वेन पूर्वव्यावृत्तेः संगत्या सूत्रम्—

**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्।५।२।९।**

वादिना त्रिरभिहितमपि परिषत् प्रतिवादिभ्यामर्थवत्त्वेनाविज्ञातं वचनमविज्ञातार्थम्। वचनस्वरूपस्य श्रौतत्वेनाविज्ञातत्वाभावात्, अविज्ञातार्थमिति लक्ष्यनिर्देशाच्च। त्रिरिति यावता परिषदोऽभिधानाकाङ्क्षा निवर्तते तावद्रूपं प्रतिवादिनेति प्रतिवादिबोधे परिषन्नावगच्छतीति सम्भावितमित्येतत्। तथाभूतस्यानिर्णायकत्वात्तेनावहिता विफलपरिषत्। प्रकृतार्थान्वयबोधानुकूलार्थोपस्थित्यजनकवाचकपदप्रयोगोऽविज्ञातार्थमिति लक्षणम्।

ननु पदार्थाप्रतीतौ निरर्थकत्वं वाक्यार्थाप्रतिपात्तावपार्थकत्वमेव स्यात्। वाचकप्रयोगान्निरर्थकादस्य भेदेनान्वयानिश्चयादपार्थकादिति चेन्न, पञ्चस्कन्धत्वदशायतनादिपदप्रयोगस्यापि निरर्थकपदप्रयोगरूपत्वात्। न हि ते तदर्थस्य वाचकाः। अवान्तरसमयवत्त्वात्। तादृशस्यापि वाचकत्वे[ति]प्रसङ्गात्। अनर्थश्च वाक्यार्थधीविरहः, अयोग्यत्वं वा ? नाद्यः, अत्रापि तस्य मानसप्रत्यक्षत्वात्। नान्त्यः, अपार्थकेऽपि व्यवधाना[द]नन्वये तदभावात्। गमितयोगेषु अन्वयप्रत्ययोऽस्तीति चेत्, कथं तर्ह्यविज्ञातार्थता। तात्पर्यविषयाज्ञानादिति चेन्न, तथाप्येतेन तद्विषयास्कन्दनापत्तेः।

मैवम्। उच्चारयितृदोषादनिश्चितपदभावस्य वचनस्याविज्ञातार्थत्वात्। पञ्चस्कन्धादावर्थाज्ञानात् पदत्वसंशयात्। अन्यथा तु निरर्थकत्वमेव। क्वचिच्च साङ्कर्येऽप्यदोषात्।

वस्तुतः पञ्चस्कन्धादिपदानां तत्तदर्थाशक्तत्वेऽपि समूहादिवाचकानां रूपादिसमूहविशेषपरत्वेऽपि वाचकत्वमस्त्येव। एवमन्यत्रापि। आकाङ्क्षाविरहादनन्वितस्यापार्थकत्वात्तदतिरिक्तरूपेणानन्वितपदार्थोपस्थापकपदस्य चाविज्ञातार्थत्वात्।

केचित्तु कटाटङ्कादिपदप्रयोग एव पदार्थः। प्रत्ययवैधुर्यादविज्ञातार्थता। पराभ्युपेतसमयशून्यप्रयोगे तु निरर्थकत्वम्। परसिद्धसामयिकपदार्थप्रतीतौ चानन्वयावगमेऽपार्थकत्वमित्याहुः।

अप्रत्यायकत्वादर्थान्तरादस्य भेदः। अर्थाधारणेयं[?]दूषयिष्यतीति भयादस्याज्ञानं प्रत्येष्यतीति व्यामोहात्। सभाक्षोभाद्वा[ऽ]स्योक्तिसम्भवः। तच्च त्रिविधम्, स्वकीयतन्त्रमात्रप्रसिद्धम्, अश्व[अ]प्रतिपद[दं]योगमनपेक्ष्य, रूढिपूर्वको हि योगः पङ्कजादिपदवदप्रतिपद एव भवति। पदप्रविवेकोपायप्रकरणाद्यपायादापादितसंशयः शिष्टप्रदप्रयोगश्च।

**तत्राद्यं यथा** पञ्चस्कन्धाः, द्वादशायतनानि चतुरार्यसत्यादि बौद्धानाम्। सकृद्द्वारेदमर्थ्यादि[प्राभाकर]मीमांसकानाम्। तत्र पञ्चेन्द्रियाणि पञ्चविषयाश्च रूपस्कन्धः। शब्दोल्लेखि सविकल्पकं ज्ञानं संज्ञास्कन्धः। रागादयः संस्कारादयः संस्कारस्कन्धः। सुखदुःखवेदनास्कन्धः, निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः। द्वादशायतनानि षडिन्द्रियाणि षड्विषयाश्च। चतुरार्यसत्यानि दुःखसमुदयनिरोधमार्गरूपाणि। तत्र दुःखं सुखं मुख्यामुख्यं वा। समुदय संसारोऽस्याः समुदेति इति, निरोधः सहेतुकदुःखापगमः, मार्गो नैरात्म्यक्षणिकसाक्षात्कारः, मोक्षोपायत्वात्। द्वितीयं यथा—पर्वतोऽयमग्निमान् धूमवत्त्वात्, महानसवदिति वक्तव्ये कश्यपतनया धृतिहेतुरयम्, त्रिनयनतनययान समाननामधेयवान् तत्केतुमत्त्वात्, विसिनीवदित्यादि। तृतीयं यथा-श्वेतो धावतीति, तत्र प्रथममुभयानुमत्या क्वचिदुपादीयेतापि वादिनोः परस्परमताभिज्ञानशौटीर्यात्। अन्यथा तु सोऽप्यर्थः साधारणवचसैव प्रतिपाद्यः। तदुत्तरस्तु द्वयमनादेयमेव।

परिषत्प्रतिवादिनो जाड्येनापि वाक्यार्थानवबोधोपपत्तेर्नेदं निग्रहस्थानमिति चेन्न, यथोक्तस्य बोधानुपायत्वात्। लोकप्रसिद्धं स्वप्रतिपादनयोग्यं, प्रकरणाख्यापनं, विषमद्रुतोच्चरितं हि पदमर्थप्रतीतेरङ्गम्। एतद्विपरीतमनुपादेयम्, उपाददानो निग्राह्य एव। अन्यथा स्वाशक्तिनिगूहनार्थं प्रतिवाद्यपि तथा जल्पन्न निगृह्येतेति कथानुपरमः स्यात्। तथापि कृतं त्रिरभिधानविनाम्नेन[?]प्रथमोक्तमेव, यन्न बुद्धमिति तन्न प्रतिवादिना सर्वत्र स्वाबोधाविष्कारमात्रेणैव, तेन वादिजयापत्तेः। तस्मात् परिषदा यन्न बुद्धमिति वाच्यम्। तत्र प्रथमानवबोधस्य परिषदनवधानादपीति कथमन्यापराधेन वादिनोः निग्रहः स्यादिति द्वितीयमभिधानम्। अवहितीभूय श्रुतस्यापि वाक्यस्य यदि म[अ]न्यप्रसिद्धानि पदानि वा, यदि वा योग्यतादिवैधुर्यवान्ति भवन्ति तदा न ततो वाक्यार्थप्रत्यय इति तदवधारणाय तृतीयमभिधानम्। तथापि यावताधारेणान्वयबोधविरोधिनी कुसृष्टिबलेन कृतेति न परिषदवरोधस्तावद्वारमेव वादनं, न तु त्रिरिति चेन्न, वारत्रयेणैवान्वयबोधविरोधविधूननात्। परिषत्तादृशावगमाभावस्य भा[ता]वतैव सिद्धेः। न हि बुभुत्सया परिषदभिधापयत्यनवहिता चेति सम्भवति।

न च स्थेयत्वयोग्यानां सर्वेषां त्रिर्भङ्ग्यन्तरेणाभिहितमप्यप्रत्यायकम्। अन्यत्र कुसृष्टेः। न चावरोधे विरोधं नाङ्गीकुर्यात् परिषदिति सम्भवति। वीतरागत्वादिति त्रिरिति नियम एव। तस्मात् प्रसिद्धपदैरभिधातव्यमिति रहस्यम्।५।२।९।

**[अपार्थकलक्षणम्]**

अर्थनिरूप्याविज्ञातार्थनिरूपणा[न]न्तरमर्थव्यतिरेकनिरूप्यापार्थकलक्षणमिति संगत्या सूत्रम्।

**पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकमिति ।५।२।१०।**

**पौर्वापर्यं** विशेषणविशेष्यभावः पदार्थानां परस्परमन्वयः। तज्ज्ञानयोः कार्य-

कारणभावेन पौर्वापर्यादर्थेऽपि तत्त्वमुपचर्यते, तस्य तेन वाऽयोगोऽनन्वयः । स चाकाङ्क्षादिविरहात् । तस्मादप्रतिसम्बन्धार्थमनन्वितार्थम्, परजातिवाक्यजातं वाऽपार्थकमिति सूत्रार्थः ।

वस्तुतः पौर्वापर्यायोगादिति विशेषो न विवक्षितः, अनाकाङ्क्षितत्वात् । अनन्वितार्थत्वेनैव सर्वसङ्ग्रहात् । अन्यथाऽव्याप्त्यापत्तेः । एतस्य चार्थोपस्थिते निरर्थकाविज्ञातार्थाभ्यामसङ्करः । अनन्विततया चान्वयवतोऽर्थान्तराद्भेदः । तत्र समभिव्याहृतान्वयप्रतीत्यजनकोपस्थितिजनकं वचनमपार्थकमिति न लक्षणम् । अयोग्यानामन्वयोरपि कदाचिद् योग्यतादिप्रतिसन्धानेनान्वयधीदर्शनात् । किन्तु यत्काले यत्रैकवाक्यताप्रयोजकरूपाभावस्तत्काले तदपार्थकमिति लक्षणम् ।

तत् द्वेधा-पदापार्थकं, वाक्यापार्थकञ्च । तदपि प्रत्येकं त्रेधा-अनाकाङ्क्षया, अयोग्यतया, अनासत्या च । आद्यं मुख्यम् । सदैवान्वयबोधाभावात् । कुण्डमजाजिनं, पललपिण्डः, गौरश्वश्चेत्यादि । द्वितीयम्—अग्निरनुष्ण इत्यादि । तृतीयम्—गच्छति पयसाऽश्वेन भुक्त्वा नरकं चैत्र इत्यादि ।

वाक्यापार्थकं तत्र मध्यमदूषकस्य सभाक्षोभादबोधे परस्याज्ञानमुद्भावयिष्यामीति व्यामोहात् स्वोक्तिसम्भवः । चरमस्य तु यत्र प्रतिपाद्यापादितबाधको[1] वादी सिद्धान्तमपश्यन्, पारिषज्जनरञ्जनाय किञ्चिदनन्वितं जल्पति, तत्रोक्तिसम्भवः । अकिञ्चिदभिधाने भङ्गस्य विश्वजनीनापत्तेः । न तु तथा सत्यर्थान्तरत्वमन्वयाप्रतीतेरित्युक्तम्, मुख्यस्य तु कथं, नहि योग्यः स्वस्थः परप्रतिपादनवृत्तोऽनन्वितं मुख्यतो जल्पति, नाकुशलस्य वास्तवेनान्वयेत वलितस्य तथोक्तिसम्भवात् । यथा महाजनपरिगृहीता वेदानार्वाचीनपुरुषप्रणीताः । अनादिश्च संसारः । सकर्तृकञ्च क्षित्यादि जगद्वैचित्र्यम्, न निर्हेतुकमित्यादि महाजनपरिग्रहेऽर्वाचीना प्रणयने च संसारादिनादितायाः हेतुत्वेन वास्तवान्वयस्य विद्यमानत्वात् । एवं क्षित्यादिसर्वकर्तृकत्वेन जगद्वैचित्र्यं कार्यं न निर्हेतुकमित्यत्राप्यन्यथोपस्थिताद्भेदः । यथा सामान्यवत्त्वे सति अस्मदादिबहिरिन्द्रियग्राह्यत्वादिति । पञ्चम्यवस्थापि न हेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरावरुद्धस्यानन्वयात् । पञ्चम्याः समभिव्याहृतपदार्थहेतुत्वबोधकत्वव्युत्पत्तेर्विशिष्टहेतुत्वाबोधकत्वादिति केचित् ।

तन्न, सामान्यवत्त्वे सतीति सप्तमीतः सामान्यवत्त्वस्यास्मदादिबहिरिन्द्रियग्राह्यत्वसामानाधिकरण्यस्योपस्थितौ विशिष्टहेतुत्वान्वयात् । एवंविधानां प्रामाणिक प्रयोगानां दर्शनात् । नानन्वये विरुद्धत्वस्योपजीव्यत्वे तस्यैव स्वतो दोषत्वात् । व्योमकमलं सुरभि पद्मत्वादित्यपार्थकमेव । आश्रयासिद्धिस्त्वसङ्कीर्णाश्रयविशेषणाप्रतीतौ द्रष्टव्या ।५।२।१०।

---

१. वाद्युप ।

[निग्रहस्थानत्रिकलक्षणप्रकरणम्]

[अप्राप्तकाललक्षणम्]

अथ सिद्धान्तं निरूप्य निग्रहस्थानत्रिकलक्षणप्रकरणम् । तत्रापि कथञ्चिदन्वयादपार्थकाद्भेदयितुं तदवान्तरसूत्रम्—

**अवयवविपर्यासोऽप्राप्तकालम् ।५।२।११।**

अत्रानाकाङ्क्षितत्वस्य सामान्यस्यावश्यमुपस्थितेस्तेनैवान्वयात् । सङ्कोचापत्तेश्च । अवयवशब्दः समस्तकथाभागपरः । प्रकरणात् कथाया उपस्थितेस्तयैवावयवपदान्वयात् । विपर्यासो व्युत्क्रमः, न तु प्रतिज्ञादिपर एव, भागान्तरविपर्यासापत्तेः । न च कथायां भागान्तरं नास्त्येव । अनुकूलतर्कवचनस्य दूषणपक्षधर्मतावचनस्य च सत्त्वात् । प्रतिज्ञादिवचनत्वेऽपि सामान्यस्य कथाभागस्योपस्थितेः तेनैवान्वयात् । तथा च कथायां कथाप्रयोजकभूतसमयविषयाभिधानक्रमव्युत्क्रमोऽप्राप्तकालमिति लक्षणम् ।

न च विरोधापसिद्धान्तान्यतरत्वप्रसङ्गः । क्रमविपर्यासस्यैवोपजीव्यत्वेन दोषत्वात् । सभ्याद्याकाङ्क्षितक्रमविपर्यासो वा । न चैवं व्यवधानादावप्यपार्थ[क ?]मेव स्यादिति वाच्यम् । अनन्वयार्थसन्धानेऽपि दोषत्वात्, क्वचित्सङ्करेऽप्यदोषादित्युक्तम् । उद्देश्यप्रतीतिप्रयोजनकक्रमविपर्यासो वा ।

तदिदं चतुर्विधम्—पादपादांश-अवयव-तदंशविपर्यासभेदात् । तथा हि वादिना सिषाधयिषितसिद्ध्यर्थं हेतुप्रयोगः । समस्तहेत्वाभासशङ्काकलङ्कनिरासरूपः, कण्टकोद्धारश्च कर्तव्य इति कथायाः प्रथमः पादः । न हि स्थापनामकृत्वा कण्टकोद्धारो युज्यते तद्विषयानुत्थापनात् । ततः प्रदिवादिना तस्योपशिष्टो द्वितीयः पादः । न ह्यदूषिते परोक्ते स्वपक्षसाधनं युक्तम्, तस्योक्तस्यापि तद्विरोधे फलाजनकत्वात् । ततस्तेन स्वपक्षे हेतुप्रयोगः, तत्र हेत्वाभासनिरासश्च कर्तव्य इति तृतीयः । न हि परोक्ते दूषितेऽपि साधनं विना साध्यसिद्धिः । चतुर्थस्तु कथायाः पादो जयादिव्यवस्थापनम् । स च फलतयेह निग्रहानुपयुक्तत्वा०[त्] गलितः चतुर्थकालीनत्वात् । तत्र यदि वादी प्रथमत एव हेत्वाभासानुद्धरति पश्चाद्धेतुं प्रयुङ्क्ते तथा पादांशविपर्ययः, प्रतिवादी वा प्रथमं स्वपक्षे साधनं प्रयुङ्क्ते पश्चात्परोक्ते हेतोर्दूषणं, तदा पादविपर्ययः । अवयवविपर्यासस्तु प्रसिद्ध एव । तदा स विपर्ययो यथा सकर्त्तृकं विवादाध्यासितमिति सभाक्षोभादेव स्वोक्तिसम्भवः ।

ननु क्रमव्यतिक्रमे यद्यर्थधीस्तदा किमर्थं पूर्वोक्तक्रमादर इति तद्व्यतिक्रमोऽपि न निग्रहः । न चेत्तदाऽपार्थकत्वमेव स्यात् । मैवम् । व्युत्क्रमाऽभिधानेन प्रतीतावपि शास्त्रकारादृतक्रमविशेषस्यैवान्वयप्रतिपादकत्वेनाभ्युपगमे तदुल्लङ्घने निग्रहस्यौचित्यात् । अर्थप्रत्यय एव कुत इति चेन्न, तत्रापि प्रकृतक्रमा[नुमा]नादेवार्थप्रत्ययात् । यथापभ्रंशे वाचकमूलशब्दानुसन्धानादर्थप्रत्ययः ।

ननु साधुशब्दवदपभ्रंशेऽपि शक्तिः, अर्थप्रतीतेर्व्यवहाराधीनव्युत्पत्तेश्चाविशेषात्। अन्यथा वृत्त्यन्तराभावे सा न स्यात्। मुख्यार्थाभावेन लक्षणाया अभावात्। अपभ्रंशेन साधुशब्दस्मृतेस्तथाऽर्थधीरिति चेन्न, तमजानतामपि ततोऽर्थप्रतीतेः। तदर्थकसंस्कृतेनार्थाप्रतीतेश्च। शक्त्यारोपात्ततोऽर्थधीरिति चेत्, न, मानाभावात्। व्यवहारादिना शक्तिग्रहबाधकाभावाच्च। न वा शक्तिसाध्यं तदारोपाद्भवति। आरोपितदहनभावादपि दाहापत्तेः।

अथ ज्ञायमानकरणे प्रयोजकरूपवत्तया ज्ञायमानादेव फलम्; लिङ्गारोपतोऽनुमितिवदिति चेत्, तर्हि तद्वदेव फलस्याप्याभासतापत्तिः। अन्यथाऽपभ्रंश एव शक्तौ साधु शब्द एव तथेत्यापत्तेः। सादित्वाच्चैत्रादिपदवदाधुनिका एव तत्र सङ्केता[ताः], गवादिपदत्वे[तु][अ]नादित्वाच्छक्तिरिति चेन्न, सजातीयप्रयोगजन्यप्रयोगत्वस्य भ्रमाद्यजन्यप्रयोगत्वस्य वाऽनादित्वस्यापभ्रंशेऽपि सत्त्वात्। तदुद्देशापभ्रंशे सङ्केतयितॄणामस्मरणाच्च।

अथापभ्रंशानां देशभेदे[ना]नैकत्रार्थे बहु[वृत्त] त्वात्। संस्कृतस्यैकत्रैव वृत्तत्वात्तत्रैव शक्तिर्लाघवादिति चेन्न, प्रमाणवतो गौरवस्येष्टत्वात्। अन्यथा नानार्थोच्छेदः। प्रतीत्यन्यथाऽनुपपत्तिस्तुल्या।

ननूभयोः शक्तत्वे साध्वसाधुविभागात्तद्व्यवहारविरोधः, साधुभिः भाषितव्यम्, नापभ्रंशितवै, न म्लेच्छितवै इत्यादिकवैदिकविधिनिषेधानुपपत्तिश्चेति चेत्, शक्तत्वाविशेषेऽपि तदभियुक्तेन्द्रपाश्यादिप्रणीत[1]व्याकरणोपसंगृहीतानामेव संस्कृतानां साधुत्वमस्तु, न ह्यपभ्रंशे तैः साधुत्वं स्मर्यते। तद्विषया एव वैदिकविषयाः। तेषामेव धर्मोपयोगित्वम्, स्वभावात्। बीजस्येवाङ्कुरे।

उच्यते, एकशक्तेरन्यत्र तदारोप्यार्थप्रतीत्युपपत्तौ शक्तिरेकत्रैव कल्प्यते। अनन्यलभ्यस्यैव शब्दार्थत्वात्, अन्यथा वृत्त्यन्तरोच्छेदः। सा च संस्कृत एव, सर्वदेशे तस्यैकत्वात्। नापभ्रंशेषु तेषां प्रतिदेशमेकत्रार्थे भिन्नरूपाणां तावच्छक्तिकल्पने गौरवात्। पर्यायबहुत्वञ्चोभयत्रापि। न च देशभेदेऽपि प्राकृतस्यैकरूपत्वात्तत्रैव शक्तिः। संस्कृत उभयवादिभेदेन तस्याप्यनेकत्वात्।

तदुक्तम्—

"तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः[2]" इति।

एवञ्च शक्त्यारोपादर्थप्रतीत्युपपत्तौ नापभ्रंशेऽपि शक्तिः। कथन्तर्हि संस्कृतमजानतां तच्छक्त्यारोपः। इत्थं केनचिद् गोशब्दे प्रयोक्तव्ये प्रमादाद् गावीशब्दे

---

१. पाशी वरुणः, [पाणिन्यादि ?] इति पाशीपदस्थाने युक्तः प्रतिभाति पाठः।

२. भ्रमः ख।

प्रयुक्ते व्युत्पन्नस्तेन गोशब्दमुन्नीयत भो, गां प्रतीत्य व्यवहृतवान्, पार्श्वस्थश्च व्युत्पद्यते गावीशब्दादेवायं गां प्रतीतवानित्यवगत्य गावीशब्दमेव गोशब्दत्वेन प्रतीत्यान्येषां व्युत्पादको बभूव । ततः प्रभृत्यपभ्रंशे शक्तिभ्रमः । एवञ्च प्रथमं व्युत्पन्नस्यापभ्रंशेन स्मारितात् साधूशब्दाद ० [र्थ] धीस्तन्मूलकश्चाग्रे ।

ननु संहितसाधुशब्दानामपि शक्तिभ्रमात् शक्तत्वेन ज्ञातस्यैव शाब्दधीहेतुत्वात् । न हि शक्तिज्ञानयथार्थत्वं शब्दप्रमाहेतुः । अनाप्तोक्तेर्व्यभिचारात् । नापि जनकज्ञानभ्रमत्वेन तज्जन्यभ्रमत्वं, भ्रमानुव्यवसाये व्यभिचारात् । प्रमाजनकत्वञ्चापभ्रंशस्यावश्यकशाब्दप्रमाहेतोर्यथार्थयोग्यतादिज्ञानात् ।

न तु शक्तिज्ञानयथार्थत्वमपि तत्र तन्त्रम्, गौरवात् । अबाधितसंसर्गधीनजनपदार्थोपस्थापकत्वादित्यन्ये । संसर्गबाधकप्रमाविरहादित्यपरे ।

ननु साधुत्वं न प्रतिपादकत्वं, अपभ्रंशेऽतिव्याप्तेः । नाप्यनादिप्रयोगयोगित्वम्, अपभ्रंशेऽपि गतत्वात् । संज्ञाशब्दाव्याप्तेश्च, लौकिकगौणलाक्षणिकयोरसाधुत्वापत्तेः । तदुपगमे च वेदेऽपि तयोरसाधुत्वापत्तेः ।

अथ साधुत्वं जाति[1]०[म]त्वादिव्याप्तिकाव्यापकवश[2]संस्कृतश्रोत्रबाह्यत्वान्नानुपलब्धिबाधः ।

न च संज्ञाशब्दानामसाधुत्वापत्तिः, तत्रापि प्रकृतिप्रत्यययोरसम्भवात् । न च गाव्यादिशब्देऽपि तत्सम्भवात् साधुत्वापत्तिः[त्तेः] । यत्र ह्यर्थे तथा सम्भवस्तत्र तथैव, गाव्यादौ तु न तथेति चेन्न, जातिरूपत्वे तस्य सप्रतियोगिकत्वानुपपत्तेः । भवत्त्वादेस्तु जातित्वेऽप्युत्कर्षरूपत्वादवधिनिरूप्यत्वम् । नापि यज्ञप्रयोगार्हशब्दत्वम् । अर्ह[त्व]स्य तदवच्छेदकं विना दुर्निरूपत्वात् । साधुत्वेनैव तद्विधानात् । य[द्वा]ज्ञानेऽपि साधुत्वज्ञानाच्च । नापि धर्मजनकशब्दत्वम्, पतितोच्चार्यमाणस्यापि साधुत्वात् । नापि वेदस्थशब्दत्वं, संज्ञाशब्दे तदभावात् । "भाषायां सदवसश्रुव"[५।२।१०८ पाणिनिसूत्रम्] इत्यादेश्च साधुत्वानुशासनविरोधाच्च । सर्वेषां साधुत्वेन सप्रतियोगिकत्वानुपपत्तेश्च । न हि क्वचिद्विषये तद्वेदस्थं, क्वचिन्न, विरोधात् । नापि व्याकरणव्युत्पाद्यशब्दत्वं परस्पराश्रयत्वात्, साधुत्वे हि सिद्धे व्याकरणवृत्तेः साधुत्वान्वाख्यायकस्य व्याकरणशब्दवाच्यत्वात् ।

उच्यते । यः शब्दो यत्रेश्वरेण सङ्केतितः, स तत्र शक्तः, साधुरिति चोच्यते । परेषां शब्दार्थयोः स्वाभाविकसम्बन्धवदस्माकमीश्वरसङ्केतस्य नियामकत्वात् । यथा या काचिदोषधी नकुलदंष्ट्रा स्पृष्टा सा विषं हन्ति तथा प्रतिपादकत्वाविशेषेऽपीश्वर-

१. जातिक ख ।

२. अव्यापकरणसंस्कृत ख ।

सङ्केतिता एव शब्दाः धर्मोपयोगिनः स्वभावात्तद्विषया एव साधुभिर्भाषितव्यमित्यादि विषयः[1] ।

ईश्वरसङ्केतज्ञानं च व्यवहारादेः शब्दानुशासनाद्वा । नचान्योन्याश्रयः, पूर्वपूर्वशब्दार्थाख्यानेन साधुत्वमवगम्योत्तरोत्तरानुशासनप्रवृत्तेः । सर्गादौ भगवत एव तत् प्रणीतव्याकरणाद्वा साधु[त्व]निश्चयादुत्तरव्याकरणप्रवृत्तिः । विश्रामविश्रमशब्दयोश्च साधुत्वे पाणिनिचन्द्रगोमिव्याकरणविरोधे "वैश्रमोर्विकल्प इष्यते" इति महाभाष्यकारवचनादुभयमपि साधु । न चाधुनिकसङ्केतविषयाणां संज्ञाशब्दानामसाधुत्वापत्तिः, "द्वादशेऽहनि पिता नाम कुर्यात्" इत्यनेन सामान्यतस्तेषामपीश्वरसङ्केतविषयत्वात् ।

अथ शास्त्रकारसङ्केतितशब्दात् कथमर्थधीः, शक्तितदारोपवृत्त्यन्तराणामभावादिति चेन्न, ये[न]शब्देनोपस्थितेऽर्थे गवादिपदसङ्केतग्रहः, तस्मादेव गवादिपदेन स्मारितादर्थप्रत्ययात् । चेष्टास्मारितपदादिव ।

**अत्रास्मत्पितृचरणाः** नेश्वरसङ्केतितत्वं साधुत्वम्, तस्य निःप्रतियोगिकत्वेन सर्वस्य सर्वत्र साधुत्वापत्तेः । नापि यः शब्दो यत्रेश्वरेण सङ्केतितः स तत्र साधुः । गौणलाक्षणिकयोरसाधुत्वापत्तेः । नापि यः शब्दो[2] वाधतीत्यादौ समुदायस्यासङ्के[ति]तत्वे वाधत इत्यपि साधु न स्यात् । प्रकृतिप्रत्यययोः प्रत्येकं सङ्केतात् । अन्वयस्य प्रत्येकशक्तिलभ्यत्वात् । ईश्वरसङ्केतमज्ञात्वाऽपि व्याकरणव्युत्पाद्यत्वमवधार्य साधुत्वव्यवहाराः[3] । अत एव शक्तत्वं साधुत्वमित्यपास्तम् । किन्तु व्याकरणव्युत्पाद्यत्वं साधुत्वम् । यः शब्दो यस्मिन्नर्थे व्याकरणेन व्युत्पादितः स तत्र साधुः । अत एव गावीशब्दो व्याकरणोक्तव्युत्पत्त्या यमर्थं प्रतिपादयति तत्र साधुः, असाधुरन्यत्र । नाम्नामपि 'उणादयोबहुलम्'[पा० अ० ३-३-१]इत्यादिना व्युत्पादनात् । केवलप्रकृतिप्रत्यययोर्बाधभिया 'मगाम' इत्यादेश्च न तद्व्युत्पाद्यत्वम् गौणलाक्षणिकयोश्च यथा प्रतिपादकत्वं तद्व्युत्पादनमपि तत्रेति तयोरपि साधुत्वम् ।

न च साधुशब्दव्युत्पादनमेव व्याकरणत्वमित्यन्योन्याऽश्रयः । शब्दगुणदोषविद्भिरभियुक्तैः प्रकृतिप्रत्ययादिविभागकल्पनया शब्दार्थाख्यायकस्य व्याकरणत्वात् । न च साधुत्वे सिद्धे व्याकरणव्युत्पाद्यत्वमित्यन्योन्याश्रयः, पूर्वपूर्वव्याकरणेन व्युत्पादनादित्युक्तत्वात् ।

---

१. विधयः ख ।
२. 'नापि यः शब्दो' इति पाठो ख पुस्तके नास्ति ।
३. व्यवहाराच्च ख ।

ननु तज्ज्ञानजनकतावच्छेदिकायाः शक्तेस्तज्ज्ञानजनकताविषयकेश्वरसङ्केतवाना[1][?]ज्ञानादर्थधीरित्यावश्यकत्वात्, लाघवाच्च। तज्ज्ञानजनकत्वज्ञानमेवार्थप्रतीतौ हेतुरस्तु किं शक्तेः, ईश्वरसङ्केतस्य वा ज्ञानेन। न चैवं लक्षणोच्छेदः, लाक्षणिकस्याननुभावकत्वात्। तथात्वेऽपि तीरज्ञानजनकत्वेन ज्ञातस्य तस्य न तीरज्ञानजनकत्वं, किन्तु प्रवाहज्ञानजनकत्वेन लाघवात्।

अथ ज्ञानजनकताज्ञाप्यसम्बन्धाधीनाप्रत्यक्षादौ तथादर्शनादिति सम्बन्धत्वेन तयोः सिद्धिरिति चेन्न, तज्ज्ञानजनकत्वेन ज्ञातत्वस्यैव सम्बन्धत्वात्। नच तदेव गृह्यते सम्बन्धज्ञानं विनेति वाच्यम्। तथापि ज्ञानजनकत्वज्ञानेनैव प्रत्यक्षादिवदत्रापि सम्बन्धत्वेन शक्तिकल्पनात्। अन्यथाऽन्योन्याश्रयः। सम्बन्धज्ञाने जनकत्वज्ञानं, तस्मिंश्च सति सम्बन्धज्ञानात्। एतावताऽपि शक्तिः सङ्केतो०[2] स्ते सम्बन्धो वाऽस्तु, तद्विषयस्तु नार्थप्रत्यायकत्वम्, गौरवात्। किन्तु तद्विषयज्ञानजनकत्वस्यैव।

उच्यते। चैत्रादिपदादद्यबुद्धौ सङ्केतज्ञानहेतुबाधधारणादन्यत्रापि तत्रैव कल्प्यते। न हि 'अस्माच्छब्दादयं सम्बन्धो बोद्धव्य' इति यस्तत्सङ्केतः तज्ज्ञानं विना ततस्तदर्थबोधः। सङ्केतज्ञानात्पूर्वं तज्ज्ञानजनकत्वस्य तज्ज्ञानस्य चासम्भवात्। सादिपदे तथा, अनादिपदेष्वर्थप्रत्ययस्यान्यथाऽपि भावान्न तत् कल्पनेति चेन्न, पदत्वस्यैव प्रयोजकत्वे सम्भवति तत्र विशेषणे गौरवादिति ।५।२।११।

[न्यूनलक्षणम्]

पूर्वस्यैवास्याप्यवयवनिरूप्यत्वसङ्गत्या सूत्रम्—

**हीनमन्यतमेनाप्यवयवेन न्यूनम् ।५।२।१२।**

अत्र सूत्रे, 'अपि' शब्दो वर्णमात्रानुस्वारन्यूनत्वस्यानुक्तस्य समुच्चयार्थः। सामग्र्यधीनस्य कार्यस्यैकदेशानिष्पत्तेः। कथाभागान्तरसंग्रहार्थ इत्यन्ये। अन्यतमशब्दस्य बहुष्वेवानुशासनात्तत्रैवास्य सम्भवे सौगतस्य द्व्यवयववादिनो न्यूनत्वं न गृह्येतेति तत्संग्रहार्थ इत्यपरे। हीनमित्यस्य विशेष्याकाङ्क्षायां वचनमिति सूत्रेऽध्याहार्यमिति केचित्। तन्न, हीनन्यूनपदयोरेव धर्मिपरत्वात्। न चैवं धर्मिमात्रलाभेऽपि वचनरूपस्य तस्यालाभः। सामान्यवाचित्वेऽपि प्रकरणादिना तल्लाभात्।

ननु नेदं निग्रहस्थानम्, अतुल्यसंख्यावयवाङ्गीकर्त्रोर्वादिनोः कथामात्रविलयापत्तेः। बौद्धनैयायिकानां यथायथं प्रयोगसामग्रीन्यूनाधिकसमाधानवाद एव पर्यवसानात्। तथाहि सौगतो यदि द्व्यवयवं प्रयोगं कुर्यात्, न्यूनेन[नि]गृह्येत। अनिग्रहे वा तदधिकावयववादिन पर्यनुयोज्यमुपेक्षेत। यदि स न्यूनतया पञ्चावयववाक्यमेव

---

१. 'सङ्केतवान्नाज्ञानात्' इति ख।

२. स्ते ख।

वदेत्तर्हि असाधनाङ्गवचनेन[नि]गृह्येत। तदङ्गत्वानङ्गीकारे तु विरोधापसिद्धान्ताभ्यां तथा स्यात्। तथा च द्व्यवयवे प्रयुक्ते नियमेन न्यूने चोद्भाविते‌ऽवयवान्तराणामनङ्गता बौद्धैर्वक्तव्या। नैयायिकैरप्यङ्गता तेषां व्युत्पादनीयेत्यत्रैव कथा पर्यवसानेन विषयान्तरागमनापत्तेः। तदङ्गत्वानङ्गत्वविचारपतितनिग्रहस्थान एव कथापर्यवसानं स्यादिति चेत्, न न्यूनेन निरनुयोज्यानुयोगेनवे[1] परस्याप्रतिपत्त्याद्यनुमानेऽपि पञ्चावयवादिप्रयोगे न्यूनमधिकं वा[आ]पतेदेवेति तेनानुमाने कथा पर्यवसानाभावात्। प्रयोगान्तरं न्यूनाधिकवादस्यैव प्रस्तुतत्वात्। प्राथमिकार्थापर्यवसानेऽपि न कथायाः किञ्चित् क्षीणमिति चेन्न, निग्रहस्थानान्तरव्युत्पादनवैयर्थ्यात्। प्रयोगानन्तरं न्यूनाधिकयोरन्यतरयोरवश्यम्प्राप्तिः। प्रतिज्ञाहान्यादेर्निग्रहस्थानान्तरासंकीर्णोदाहरणाभावात्। नैयायिकवैशेषिकयोरवयवसंख्यायां सम्प्रतिपन्नयोर्विवादे तद्व्युत्पादनं सफलमिति चेत्, अतुल्यसंख्यावयवाङ्गीकर्त्रोरेव कथायाभासाक्षेपस्योपक्रान्तत्वात्। प्रतिज्ञाद्यवयवान्तराङ्गत्वानङ्गत्वविचारे तत् सफलमिति चेन्न, तस्याप्यनुमानच्छायमापाद्य साधकत्वे तत्रापि न्यूनाधिकयोरेवापत्तेः। प्रतिज्ञाद्यङ्गत्वानङ्गत्वविचारोऽप्येवं न स्यात्। सन्दिग्धेऽपि साध्ये साधनमुभयसिद्धमेवोपादीयते। यदि च साध्यवत् प्रयोगपरिमाण एव विवादस्तदा साधनमपि सन्दिग्धमेवेति कथं तन्निर्ण[या]योपादीयते।

ननु निग्रहस्थानान्तरात् फलपर्याप्तिरस्तु; अत एव न तद्व्युत्पादनवैयर्थ्यम्, न्यूनत्वमुपेक्ष्य निग्रहान्तरेण वाद्यशक्तिव्युत्पादनरुचिं प्रति निग्रहस्थानान्तरव्युत्पादनोपयोगादिति चेन्न, तथापि तद्वैयर्थ्यात्। असाधकत्वस्य वाद्यशक्तेर्वा तद्व्युत्पादनफलस्यातुल्यसंख्यावयवाङ्गीकर्तुः वादिनो न्यूनाधिकाभ्यामेव सिद्धेः। एवञ्च कथोपप्लवेन न्यूनमपि व्युत्पाद्यम्। कथां विना तत्फलाभावात् कथं वा कथायां प्रवृत्तिः। तदुपायस्य प्रयोगशरीरस्यानिर्णयात्।

मैवम्। स्वसिद्धान्ते निर्णीतप्रयोगावयवपरिमाणापेक्षया न्यूनाद्यवतारात्। न चैवमपसिद्धान्तः स्यात्, सिद्धान्तव्यतिक्रमादिति वाच्यम्। न हि स्वीकृत्य अन्यथाकरणमपि[प]सिद्धान्तः, किन्तु स्वीकृत्यास्वीकारः। सर्वनिग्रहस्थानानां तथात्वापत्तेः। तथा च सिद्धान्तविपरीताचरणेऽभ्युपगमाभावेनासङ्करात्। क्वाचित्कस्य सङ्करस्यादोषत्वात्।

ननु तथा नाभ्युपैति करोति चेति व्याहतमिति शब्दोऽभ्युपगमाभावेऽप्यभिधायकः स्यादिति चेत्, उपक्रान्तपरिपूर्णवाक्यस्यापि मध्ये सभाक्षोभादिना स्तम्भितस्यावयवान्तरावचनोपपत्तेः। तथाभिधानं तथाभिप्रायव्याप्तमिति चेन्न, सभाक्षोभादिना तद्विरहेऽपि तथाभिधानसम्भवात्। वचनाभिधानेनैव तथाभ्युपगमस्योन्नेयतया ततो

---

१. वै. ख।

जघन्यप्रतीतिकत्वात् । तथाचोपजीव्यस्य स्वतोऽशक्तिसूचकत्वादस्य पृथङ्निग्रह-स्थानत्वम् ।

यद्वा जल्पवितण्डयोर्यथावस्तु यथा वा सिद्धान्तस्तथा वाच्यमिति नियमाभावेऽपि वादे तथानियमात्तत्र न्यूनावतारः । न चैवं तथा सिद्धान्त एव कथमित्यपेक्षायां सिद्धान्तव्युत्पादने वादान्तरसंक्रान्तिः स्यात् । तथाह्यन्यतरासिद्धे वादिनोक्ते प्रतिवादिना च तथैवोद्भाविते वादिना न तदेव तत्साध्यते । किन्त्वभ्युपगममात्रेणैव तदुच्यते, तथा प्रकृतेऽपि । लक्षणं तु स्वसिद्धान्ते वक्तव्यत्वाभ्युपगतकथाभागानभिधानं न्यूनं, प्रतिपादकभागानभिधानं वा । न च कथातः प्राक् कियत्प्रतिपादकमित्यनिर्णये समयबन्ध एव न घटते । स्वाभिप्रायदार्ढ्यात्तदुपपत्तेः ।५।२।१२।

[अधिकनिग्रहस्थानलक्षणम्]

पूर्ववत् संगत्या सूत्रम्—

**हेतूदाहरणाधिकमधिकम् ।५।२।१३।**

अत्र हेतूदाहरणत्वमविवक्षितम् । अधिकस्य सापेक्षत्वात् । अपेक्षणीयसामान्यस्योपस्थितेनैवाकांक्षादेरन्वयात् । अन्यथा संकोचापत्तेः । हेतूदाहरणग्रहणमुदाहरणविशेषप्रदर्शनाय । तेनाधिकानुवाददूषणाधिकयोरपि संग्रहः । सूत्रे व्यावर्तव्यमित्यध्याहारात्, न साध्याविशेषः । यद्यप्यदूष्यानुवादोऽर्थान्तरं नत्वधिकम्, एकदूषणदूष्यानुवादश्च हेत्वधिकप्रपञ्च एव । दूषणस्याप्यनुमानत्वात् तथापि हेत्वादिपदस्य न्यायावयवपरतया विप्रतिपत्तिविषयस्थापनारूपत्वं विवक्षित्वेदमुक्तम् । अनुवादस्य चातथात्वात् । दूषणे च न पञ्चावयवं वाक्यम् तस्योभयसिद्धदूषकतया पक्षधर्मतामात्रस्यैव प्रतिपाद्यत्वात् । तेनापुनरुक्तकृतकर्तव्याभिधानसाधकमिति लक्षणम् । अन्वितत्वेनापार्थकादुपयुक्तत्वेनार्थान्तरादस्य भेदः ।

न चैवमपार्थकादिसंकीर्णतदव्याप्तिः । क्वचित् संकरेऽप्युपाधेरसंकीर्णत्वात् । न च कृतकर्तव्यत्वेनैवाशक्त्यन्वयनाद्यर्थं लक्षणविशेषणम् । इतरभेदे व्यवहारे वा साध्येऽतिव्याप्तिरधिकत्वात् । लक्षणस्य च तदेकसाध्यत्वात् । नत्वन्यदपि तत् साध्यं, येनोक्तदूषणं स्यात् । अत एव व्यर्थविशेषणे शरीराजन्यत्वादावधिकं निग्रहस्थानं व्याप्तिपक्षधर्मतयोः सत्त्वेन हेत्वाभासादिति, परास्तम् । तत्र विशिष्टे हेतौ कृतकर्तव्यत्वस्याधिकप्रयोजकस्याभावात् । येत्रेकेनाप्यपरस्य कृतकर्तव्यत्वं, तत्रैवाधिकारभावात् । उदाहरणविशेषप्रदर्शनस्य हेतुपदोपादानादपि सिद्धेः । पदद्वयोपादानं अवयवान्तरेऽधिकसङ्कीर्णं नास्तीति ज्ञापनार्थम् । स हि प्रतिज्ञानिगमनयोस्तदसंकीर्णं सम्भवति । तथा हि प्रतिज्ञाऽधिकं समानार्थेन प्रतिज्ञान्तरेण, भिन्नार्थेन वा । भिन्नार्थेनाऽपि धर्मिभेदमादायोत्थितेन, धर्मभेदं वा । नाद्यः, शब्दोऽनित्यो विनाशीत्यादौ पौनरुक्त्यात् । न द्वितीयः शब्दोऽनित्यः; क्षित्यादिकर्तृजन्यमित्यत्रापार्थकत्वात् । न

तृतीयः, शब्दोऽनित्यो गुणश्चेत्यत्रार्थान्तरत्वात्। साध्यविशेषणानेकत्वे वर्णात्मको वाचकः शब्दोऽनित्य इत्यत्र तु पौनरुक्त्यात्। वर्णात्मकस्यैव शब्दस्य वाचकत्वात्। एवं निगमनेऽपि उपनयाधिकञ्च हेत्वधिकेनैव संगृहीतम्। हेतूदाहरणयोस्तु नैवमन्यसङ्करः। तथा हि, अग्निमदिदं धूमवत्त्वादालोकत्त्वाच्चेति। न पुनरुक्तं धूमालोकयोर्भिन्नार्थत्वात्। अव्याप्तेश्च नापार्थकं, प्रतिज्ञार्थेनान्वयात्। नार्थान्तरम्, उभयोरपि प्रकृतत्वेनाविशेषात्। केवलं कृतकर्तव्यत्वम[मेवा]वशिष्यते। एवमुदाहरणेप्यपार्थकवन्महानसवदित्यत्रापि[1]। तदिदं द्वेवार्थशब्देन विशेषतः। आदिशब्देन सामान्यतः। नेदं निग्रहस्थानं विप्रतिपत्त्यप्रतिपत्त्यसूचकत्वादिति चेन्न, परिषत् प्रतिवादिजिज्ञासामनुसृत्य कथाप्रवृत्तेः। तयोश्चैकत्रैव हेतावुदाहरणे च जिज्ञासोदयात्। अन्यथाऽर्थान्तरादेरप्यतत्त्वापत्तेः। स्वेच्छया तस्यापि प्रकृतत्वात्। यदा तु साधनाद्यन्तरे तयोर्जिज्ञासा तदा यावत् स्फूर्ति वक्तव्यम्, न तु सामस्त्येन। असर्वज्ञेन तस्याशक्यत्वात् आभ्यासिकेन यावच्छास्त्रं वा, अभिप्रौढेन यावज्जिज्ञासं वा, दोषाभिधाने तु सामस्त्यनियमाऽभ्युपगमोऽपि शक्यः। तेषां परिमितत्वात्।

ननु व्यक्त्यपेक्षया परिमितत्वं दोषोऽपि नास्ति। सामान्यापेक्षया यथा दोषस्य द्वाविंशतित्वं तथा प्रमाणस्यापि चतुर्थम्, अनुमानस्यापि पूर्ववदादित्वेन[2] त्रैविध्यमिति तत्रापि परिमितत्वमिति चेन्न, यथानुमाननिपतित यावद्व्यत्क्यभिधानं दूषणे कर्तुं शक्यते, न तथा प्रमाणेन हि प्रकृतसाध्यव्यक्तौ यावती प्रमाणव्यक्तिस्तावत्यसर्वेन-[र्वज्ञेन] वक्तुं सर्वा[सर्वज्ञ] शक्यते, प्रकृतसाध्यव्याप्यानामानन्त्यादतीन्द्रियाच्च[3]। स्फुटो दृढश्चायमर्थो भवत्विति व्यामोहादस्योक्तिसम्भवः। न चायं लक्ष्यामोहः[4]। स्फुटदृढत्वं हि न निश्चयः[5], आद्यादेव तत्सिद्धेः। नाप्यशेषविशेषनियमः। अशक्यत्वात्, अनाकांक्षितत्वाच्च। नापि दृढसंस्कारः तस्य शिष्याद्यनुकम्प्यविषयत्वात्। अत्र च तदभावात्। तत्राप्यधिकस्यात्मप्रौढिख्यापनं फलमिति न कृतकृत्यत्वमिति[6] चेन्न, तस्य जिज्ञासितमात्रविषयस्य श्लाघ्यत्वात्। अन्यथा वाक्व्युत्पादादिना ह्युपन्यासापत्तेः।

इह केचिदाहुः, द्व्यवयववादिनो बौद्धस्य प्रतिज्ञाप्रयोगे प्रतिज्ञाधिकं सम्भवत्येव। न नैयायिकादीनामसम्भवः। यदा हि वायुः प्रत्यक्षो, द्रव्यत्वादिति स्थापना। कालाकाशाभ्यामनैकान्तिकेन दूष्यते। तदा यदि कश्चित्तयोः प्रत्यक्षत्वं मन्यते तदो-

---

१. पाक ख.
२. व्यापित्वेन.
३. अतीन्द्रियत्वाच्च ख.
४. व्यामोहा.
५. निश्चयादेव.
६. कृतकर्तव्यमिति.

द्भावितानैकान्तिकत्वनिर्वाहार्थम् । कालाकाशश्च न प्रती[त्य]क्षे निरुपद्रव्यत्वादित्यनुमाने प्रतिज्ञाधिक्यं भवत्येव । अन्यतरस्यैव साध्याभावसिद्धा[व]नैकान्तिकत्वनिर्वाहात् । नह्यत्रापार्थकम्, पदार्थानां मिथोऽन्वयात् । न पुनरुक्तम् एकस्य पुनः श्रुत्यभावात् । नार्थान्तरं, द्वयोरपि प्रकृतत्वेनाविशेषात् । एवम् निगमनेऽपि वाच्यम् । तस्मादुदाहरणग्रहणन्तु हेतूपनययोर्मिथोऽसङ्कीर्णाधिकोदाहरणसूचनाय । यथा मीमांसकस्य हेतुद्वयकरणम्, यथा वा सौगतस्योपनयद्वयकरणे मध्य[पद]लोपो वा ।

हेतूदाहरणाद्यधिकमित्यर्थात् प्राचां त्वयमभिप्रायः । नैयायिकादीनां विप्रतिपत्तिविषये प्रथमस्थापनायां हेतूदाहरणयोरेवाधिमिति ।५।२।१३।

[पुनरुक्तलक्षणम्]

अधिकस्य पुनरुक्तस्याप्युक्तिनिरूप्यत्वादनन्तरं पुनरुक्तप्रकरणसूत्रम् :—

**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ।५।२।१४।**

पुनरुक्तमिति लक्ष्यनिर्देशः, पुनर्वचनमिति लक्षणम् । शब्दार्थयोरिति शब्द-[पुनरुक्तमर्थ]पुनरुक्तञ्चेति विभागस्फोरणाय । तत्राद्यमेकार्थपरस्यैव शब्दस्य तत्पर्यायस्य वा पुनरभिधानं, यथा शब्दोऽनित्यो नित्यः । यथा वा, शब्दोऽनित्य [इत्यु]क्त्वा निरोधधर्मक इति । नेत्याद्यर्थं पुनरुक्तमेव, अभेदेनाप्यविनाभावत्वेनापि क्षत्यभावात् । न गमकतयोपयिकस्य तस्याभावात् । अभेदे तत्सत्त्वेऽपि तस्यागमकत्वात् ।

ननु चान्त्येऽनित्यत्वविनाशित्वयोर्न्नाभेदः । अन्यथा धूमवत्त्वोपलक्षणतयाऽग्नेर्व्याप्यत्वाभिधानस्यापि पौनरुक्त्यापत्तेः । न च सिद्धप्रतिपत्तेरर्थस्य प्रयोजनं विना प्रतिवादनाय पुनर्वचनं पुनरुक्तिमहत्प्रयोजनमस्तीति वाच्यम् । पुनरुक्तस्य प्रकृतप्रयोजनशून्यस्यार्थान्तरविशेषापत्तेः न, सिद्धप्रयोजनस्य प्रयोजनं विनेति विवक्षितत्वात् । अत एवानुवादादस्य भेदः । अर्थान्तरं तु न सिद्धप्रयोजनम् ।५।२।१४।

द्वितीयलक्षणसूत्रम्—

**अर्थादापन्नस्य स्वशब्देन पुनरभिधानं[1] पुनरुक्तमिति प्रकृतम् ।५।२।१५।**

नात्र पुनः शब्द उक्तेरावृत्तिमाह, किन्तु प्रतिपत्तेः । तथा च प्रतिपन्नस्योक्त्या पुनः प्रतिपादनमर्थपुनरुक्तमित्यर्थः । यद्यपि वचनपदसमभिव्याहृतः पुनः शब्दः प्रतिपत्त्यावृत्तिं ब्रूते । तथापि, उच्यतेऽनेनेति व्युत्पत्त्या वागनुकूलस्य ज्ञानस्य वचनपदेनाभिधानम् । तथा च प्रतिपादितस्य तत्प्रतिपादनानधिकप्रयोजकं

---

१. 'पुनर्वचनम्' इत्यपि पाठो दृश्यते

प्रतिपादनं पुनरुक्तमिति सामान्यलक्षणम् । अर्थाक्षिप्तस्य स्वशब्देनाभिधानं न पुनरुक्तम् । हेतोरेव व्याप्त्याक्षेपादुदाहरणवचनातिव्याप्तेः । न, धूमवत्त्वादित्यादिहेतोर्व्याप्तिपरत्वाभावात् । सामान्यतो वा हेत्वाक्षेपलब्धायामपि व्याप्तौ परिषत्प्रतिपाद्याकाङ्क्षामधिकृत्य कथाप्रवृत्तौ स्वशब्दे तदभिधानस्य न्यायलब्धत्वात् । तदनाकाङ्क्षायां तु पौनरुक्त्यस्येष्टत्वात् । पञ्चम्युक्तहेतुतामात्रेण व्याप्तेराक्षेपासम्भवाच्च । हेतुत्वेनाभिधानस्य व्यभिचारिसाधारण्याच्च ।

ननु चार्थादापन्नस्येति विशेषलक्षणे पुनः शब्दो व्यर्थः, अर्थादापन्नस्य स्वशब्देनाभिधानमित्यत एव प्रतिपत्त्यावृत्तेर्लब्धत्वादिति चेन्न, तात्पर्यवृत्तिप्रतिपादनार्थत्वात् । अन्यथा तात्पर्याविषयेऽप्यर्थादापन्नेऽभिधानस्य पुनरुक्तत्वापत्तेः । तथाप्येकशब्दा[द]र्थापन्नस्य शब्दान्तरादापत्तावपि पौनरुक्त्यं स्यादिति चेन्न, अविनाभाव[स्य]पुरुषानधीनतया तेनापनेतुमशक्यत्वात् । नन्वेवं प्रथममप्यर्थादापन्नत्वं न दोषः स्यात् ।

अथ प्रथमार्थापन्ने यत्र पर्यायस्तत्रैव दोषः । तर्हि प्रथमार्थापन्ने यत्र तात्पर्यं तत्र द्वितीयार्थापन्ने तात्पर्यं दोषायैव स्यात् । तात्पर्यमेव वक्तुः तत्कथमुन्नेयमिति तु प्रथमेऽपि तुल्यम्; तस्मादुदाहरणमात्राभिप्रायेणैतदुक्तमिति सम्प्रदायविदः ।

ननु माभूदविनाभावः पुरुषाधीनः, शब्दान्तरोच्चारणं तावत् पुरुषाधीनम्; तस्यैवार्थापन्नोपस्थितौ प्रयोजकत्वमिति चेत्, नह्यर्थापन्नप्रतीतितात्पर्यकं शब्दोच्चारणं, किन्तु शब्दार्थप्रतिपादनपरम् । अर्थादापन्ने पूर्ववदाक्षिप्तोक्तिः, यथाऽग्निनोष्णेन-[उक्तेन]पर्वतोऽप्युक्तः । इयमेव विपर्यासेनोत्तरपदाशक्तिः । वाक्येऽपि विध्याक्षिप्तनिषेधो यथा बहिरस्ति तेऽत्र इत्युक्त्वा "गेहे नास्तीति" उक्त्वा बहिरस्तीति । अत्र सूत्रेऽभिधेयनिरपेक्षपदश्रुत्याह । वृत्तिमात्रेणाऽपि पौनरुक्त्यमस्तीति दर्शयितुं शब्दग्रहणम् । यथा "जबगडदश्" इति [माहेश्वरसूत्रम्] निरर्थकावृत्तौ । नच तत्र निरर्थकत्वमेव । क्वचित्सङ्करस्यादोषात् । यथा च शब्दस्यार्थस्य च प्रयोजनं विनोच्चारणं प्रतिपादनञ्च पुनरुक्तमिति सूत्रार्थ इति केचित् ।

तन्न, लक्ष[ण]गतोक्तपदस्य लक्षण एव, वचनपदस्य चोच्चारणप्रतिपादनरूपार्थभेदपरत्वे वाक्यभेदापत्तेः । निरर्थकावृत्तौ च निरर्थकमेवासङ्कीर्णम् ।५।२।१५।

## [निग्रहस्थानचतुष्कलक्षणप्रकरणम्]

### [अननुभाषणलक्षणम्]

अथ वचननिरूप्यत्वादुत्तरविरोधिनिग्रहस्थानचतुष्कलक्षणप्रकरणम् ।
सूत्रम्—

**विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ।५।२।१६।**

परिषदेति स्थेयमात्रोपलक्षणम्। तेन तदेकदेशावबुद्धावननुभाषणैकस्थेय-कथाऽननुभाषणयोः संग्रहः। विज्ञातस्य वादिवाक्यार्थस्य परिषदेति कर्तृनिर्देशात्। प्रतिवादिनोऽज्ञानमविवक्षितमिति दर्शितम्। किन्तु तदभ्युपगमाविष्कारमात्रं विवक्षितम्। न तु वास्तवोऽभ्युपगमः। तस्य ज्ञाननियतत्वात्। त्रिरभिहितस्येति यावताऽभिधानेन प्रतिवाद्युच्चारणयोग्यस्वावबोधानाविष्करणं तावत्त्वावसितिर्हि[?] तस्यैतत् परम्। तदाविष्कारे ज्ञानावतारात्। योग्यतापरत्वं भिन्नक्रमापि शब्दस्यानास्थापरत्वेन लभ्यते। अभिधानञ्च वादिना स्थेये न वा विशेषनिर्देशासङ्कोचात्, अप्रत्युच्चारणमप्रतिपादनम्।

तदयमर्थः—वादिनोक्तस्य परिषदावबुद्धस्य पुनर्वादिना परिषदा वाऽनूदितस्य योग्यस्वस्थेनानवबोधमनाविष्कुर्वता कथामविच्छिन्दताऽप्रत्युच्चारणमननुभाषणम्। अत्राद्येनाविज्ञातार्थव्यवच्छेदः। योग्यता प्रत्युच्चारणप्रयोजकान्तःकरणपाटवम्। स्वस्थता कौलिकरोगाद्यभावः[1]। अनवबोधमित्यादिनाऽज्ञानव्यवच्छेदः। कथामविच्छिन्दतेति विक्षेपव्युदासः।

न चैवमेकदेशाद्यननुभाषणासंग्रहः। लक्ष्यलक्षणगतनञ्द्वये प्रसज्यप्रतिषेधपर्युदासलक्षणाभ्यामभावः। पदैकदेशाद्यननुभाषणञ्च लभ्यते। न चैवमुभयपरत्वे युगपद्वृत्तिद्वयविरोधः। अजहत्स्वार्थलक्षणया प्रत्युच्चारणविरोधिव्यापारस्य लक्ष्यत्वमित्यर्थात्। अन्योन्याभावस्यात्र तात्पर्यविशेषात्, नञाभिधानात्, योग्यतान्वयप्रकारत्वेन तदन्योपस्थितिरिति न लक्षणेत्याहुः।

न च स्तम्भाव्याप्तिः; तत्राप्यनुवादिनः शरीरेन्द्रियावस्थाविशेषस्य सत्त्वात्। एकदेशाधिकप्रत्युच्चारणयोरपि समीचीनप्रत्युच्चारणविरोधिव्यापारसत्त्वान्नाव्याप्तिः। तथा चानुवादयोग्यकाले तद्विरोधीव्यापारोऽननुभाषणमिति लक्षणम्।

केचिद्धारणावतामनुरोधविधिवशादर्थानवबोधाविष्कारेण शब्दमात्रानुवादसम्भवादस्याज्ञानसङ्करः।

न च शब्दमात्रानुवादो न युक्तः, अर्थस्य दूष्यत्वेन तदनुवादस्यैवार्हत्वादिति वाच्यम्। निरर्थकानुवादाभावापत्तेः। यत्र चाननूद्य दूषयित्वा कातरतया व्याजोत्तारणकथां विच्छिनत्ति, तत्रास्य विक्षेपसङ्करः। न चैवमसङ्कीर्णोदाहरणाभावेन तयोरनिग्रहस्थानत्वम्। यत्र वादिवाक्यं सम्यगनूद्याज्ञानाविष्कारकथाविच्छेदौ तत्र तयोरसङ्करादिति। न तयोर्व्यापकं लक्षणे विशेषणम्; सङ्कीर्णोदाहरणाव्यापकत्वादित्याहुः।

तन्न, तथापि येन सङ्करः, तद्व्यावृत्तमानाया अपि लक्षणं विशेषणीयमेव। तयोरसङ्कीर्णोदाहरणसम्भवेनैतद्विशेषाभावात्।

---

१. स्वास्थ्यं तात्कालिक ख।

अन्ये तु स्वस्थेनानुवादकालेनानुवादोऽननुभाषणमिति लक्षणम्। न चैवमज्ञान-विक्षेपयोरेतद्व्याप्यत्वं स्थापनां सम्यगभिप्राय तदैव[अ]ज्ञानाविष्कारे कथाविच्छेदे वा तयोरसङ्कारादित्याहुः।

तदेतत् पञ्चधा—तदित्यादि सर्वनाम्नानुवादेन वा, एकदेशानुवादेन वा, विपरीतानुवादेन वा, केवलदूषणोक्त्या वा, स्तम्भेन वा।

नचाधिकानुवादो दूषणानुवादश्चाधिकः, सत्युक्तस्यानुवादो वा, उक्तत्वेनानुवादो वा। आद्ये तत्त्वासिद्धिः। द्वितीये तु विपरीतानुवाद एव तयोरन्तर्भावः। अत्र च यत्रैवानेकं प्रकृतम्, तत्र सर्वनाम्नाऽनुवादो दोषः। बहूनां प्रकृतत्वेन विशेष्य[विशिष्य] दूष्या सा[?]नुपस्थानात्, योग्यतायाश्च वादिनामयोग्याभिधानसम्भवेनानियामकत्वात्। अन्यथाऽतिप्रसङ्गात्। न च स्तम्भेऽज्ञानाप्रतिभयोरन्यतरमुद्भाव्यतां, किमनेनेति वाच्यम्। नहि, अज्ञानमप्रतिभा वा निश्चेतुं शक्यते। ज्ञातसाधनस्य स्फुरदुत्तरस्यापि वा कुण्ठात्वेन क्षोभेण वा नानुवादोपपत्तेः। अननुभाषणस्य च योग्यताऽनुपलब्ध्यैव निश्चयात्। ततो निश्चितानिश्चितयोर्निश्चितस्योद्भाव्यत्वात्। अनिश्चितनिग्रहोद्भावनेऽतिप्रसङ्गात्। तत एव तन्निश्चयेऽस्यैवोपजीव्यतया दोषत्वात्।

ननु नेदं निग्रहस्थानम्, अननुभाष्याऽपि सम्यक् साधनमभिदधानस्याप्रतिपत्तिविप्रतिपत्त्योरभावात्। असदुत्तरत्वे तद्दोषेणैव दुष्टत्वात्। तथा च नैदं निग्रहस्थानमिति तदन्तः। यदाह, न ह्यनुवादोऽप्युपजीव्यत इति। न, दूष्यानभिधाने दूषणस्यानाश्रयस्य दूषणत्वायोगात्। तथापि दूष्यभागस्यैवानुवादो युक्तः न त्वदूष्यभागस्य तस्यादोषत्वात्। न च सर्वमनूद्य पुनर्दूष्यानुवादो, द्विरनुवादे गौरवात्। न यावद्दूष्यं, तावदननुभाषणस्यैव दोषत्वात्।५।२।१६।

[अज्ञानलक्षणम्]

ज्ञानाभावनिरूप्यत्वसंगतया सूत्रम् —

**अविज्ञातञ्चाज्ञानम् ।५।२।१७।**

अविज्ञातमिति भाष्योक्तः [क्तम्], अविज्ञातं यस्य, तस्याज्ञानं, इति सूत्रे सम्बन्धान्न साध्याविशिष्ट्यम्। परिषद् विज्ञानानुकर्षणार्थश्चकारः। तेन परिषद् बुद्धमनूदितमपि वादिवाक्यं यदि प्रतिवादी न जानाति तदाज्ञानम्। तथा च कथायां प्रकृतविषयेऽस्याज्ञानाविष्करणमज्ञानमिति लक्षणम्। आविष्करणञ्च न जानामि किमनेनोक्तमित्यभिधानादेः, अत एवाननुभाषणाद्भेदः। अनवबोधमनाविष्कुर्वतो ह्यनुवादावसरः। स्वावसरोचितार्थक्रियाभ्रंशे हि निग्रहः। अन्यथाऽनूद्यमानदशायामप्यननुभाषणोद्भावनप्रसङ्गात्। तस्मादबोधं विभाव्य तिष्ठते। नाननुभाषणावसरः। अत एव नाप्रतिभा तस्य, अनुवादोत्तरकालीनत्वात्। अबोधमनाविष्कुर्वत उत्तरं श्रोतुं साकाङ्क्षे असभ्यादि[1] उत्तराप्रतिपत्तेरप्रतिपत्तेरप्रतिभावत्वात्। न चानवबोधमना-

---

१. सुसभ्यादि ख

विष्कुर्वत इति विशेषणं न देयं, व्यर्थत्वादिति वाच्यम्। अज्ञानविक्षेपबहिर्भावस्य प्रयोजनकत्वात्।

यद्वा सभ्येन वादिना वाऽनूद्यमानानन्तरं बोधानाविष्करणमज्ञानम्, स हि, अप्रतिषेधनञा व्यतिरेकस्यैवाभिधानात्। तथा च न जानामीत्यभिधानेऽनभिधाने वा ज्ञानमेव बोधमाविष्कृत्याननुवादेत्यननुभाषणम् । नचाज्ञानाविष्कारस्य साधनदूषणयोरनुपयोगादर्थान्तरमेवेदमिति वाच्यम्। अर्थान्तरे हि कथाविच्छेदो मा भूदिति येन फलाभिरूपेणान्वयप्रतीतिरुद्देश्या, अत्र तु तदभावः ।५।२।१७।

[अप्रतिभालक्षणम्]

पूर्ववत् सङ्गतिः। सूत्रम्—

**उत्तरस्याप्रतिपत्तिरप्रतिभा ।५।२।१८।**

अत्र पर्युदासनञा प्रतिपत्तिविरोधी व्यापारोऽभिधीयते। तेनोत्तरावसरे तद्विरोधीव्यापारोऽप्रतिभेति लक्षणम्। स च खसूचनं, केशसमारचन-श्लोक-पाठ-राजवार्तादिरूपो लोकप्रसिद्धः।

यद्वा, अप्रतिपत्तिपदेन तदुन्नायकः कथकव्यापारोऽभिधीयते। तथा चोत्तरावसरे तद्विषयाज्ञानोन्नायकः कथकव्यापारोऽप्रतिभेति लक्षणम्। अनुवादान्तरमेतदवसर इति नात्रानर्थभाषणम्। नाप्यज्ञानमुद्भाव्यम्, परज्ञानस्य तदा सन्दिग्धत्वात्। अयं तदनाविष्काराच्च न विक्षेपः, न व्याजोत्तरेण कथाविच्छेदात्। नार्थान्तरम्, प्रसक्तानुप्रसक्तेरभावात्। नापार्थकम्, खसूचित्वादेरन्वयप्रतियोग्यप्रतिस्थापकत्वात्। तस्मिन्नवसरेऽवहितायां परिषदि वादिनि च श्रोतुमेकभाने [?] प्रतिवाद्युत्तरमनाददानः सर्वथाऽप्रतिभया निग्राह्यः।

ननु श्लोकपाठादावर्थान्तरमिति चेत्, न, तल्लक्षणेऽनवधानस्याविशेषणत्वात्। विशेषणे च हेतुभावात्। किञ्च यद्युत्तराप्रतिपत्तिरप्रतिभा तदा स्फुरदुत्तरस्यापि श्लोकपाठादिसम्भवादव्याप्तिः। अथोत्तरानभिधानमात्रं विवक्षितं, तथाप्यनूद्योत्तरमनभिधानस्य नूनमेव स्यात्। न चोपजीव्यत्वेनास्याः पार्थक्यं श्लोकपाठादिना न्यूनत्वोन्नयनादिति वाच्यम्। योग्यस्योत्तरस्यानुपलम्भेनैव तदुन्नयनात्।

उच्यते, कथा कथञ्चित् परकीयप्रकृतार्थान्वयप्रतीतिपरवाक्यप्रयोगेण स्वाज्ञानतिरोधित्सया स्वभावान्नार्थान्तरम्। अन्यथाऽपार्थकस्यापि तत्त्वापत्तेः। अथोपगमान्तरमेव किञ्चिदनभिधाने तन्न्यूनासङ्करः। न हि तदा न्यूनम्, एकदेशस्याप्यनभिधानात्। तथा चानभिधानमभ्युपगतस्य कथायामभिधानं विरोधीव्यापार एवाप्रतिभा। सूत्रे चोत्तरग्रहणमुपलक्षणम्। अत एव प्रथमकक्षायामप्यर्थमबुद्ध्वैव यत्र स्थापनावाक्यं रचयति तत्रास्यासङ्कर इत्याहुः।

असतस्थापनायामियं पर्यनुयोज्योपेक्षणसहचारिता, अन्यत्र न तथेति **प्राञ्चः।**

नव्यास्तु यत् साधनेऽपि तथा यत्र बहूनि साधनानि वाच्यानीति समयस्थितौ प्रवृत्तकथायां साधनान्तरसम्भवेऽप्येकतरसाधनप्रयोगे........?

आचार्यदेशीयास्तु नास्यामनुद्भावितायां पर्यनुयोज्योपेक्षणं, अनुद्भाविताया-मपि निग्रहस्थानत्वात्, तस्मिंस्तद्भेदादिना व्यङ्ग्यत्वात्। न च वागन्तरेण तिरोहितत्वान्न तद्व्यङ्ग्यम्, तथापि कथाविरामेण तिरोधानासम्भवादित्याहुः।

तन्न, निग्रहस्थानान्तरवदनुद्भावने स्वशक्तिपराशक्त्यनुन्नयनेऽवश्योद्भा-व्यत्वात् ।५।२।१८।

[विक्षेपलक्षणम्]

अप्रतिभावद्विक्षेपस्यापि कथानिरूप्यत्वात्तदनन्तरं विक्षेपलक्षणसूत्रम्--

**कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ।५।२।१९।**

कथकसभ्यार्थविधेयैः सम्भूय प्रवर्तितायां कार्यव्यासङ्गात् व्याजोत्तरञ्च तथा ज्ञानतस्तथा ज्ञापको व्यापारो व्याजः, तद्रूपादुत्तरात् कथाविच्छेदो विक्षेपो विक्षेपणम्, प्रकृतकालात् कालान्तरनयनमित्यर्थः। तेनोभयानुमत्या प्रवर्तितायां कथायां व्याजेन कथाविच्छेदनं विक्षेप इति लक्षणम्। तेन न कथादेशादपसरतो विक्षेपाव्याप्तिः। तत्राभिधानाभावेऽपि तथा चेष्टाया एव व्याजत्वात्। यथा मया न वक्तव्यम्, इदं मे करणीयमस्ति, श्वः परश्वो वा वदिष्यामि, ह्यो मया रसालयादुक्तं प्रतिश्यायक[को] मां वक्तुं बाधत इति व्याजोत्तरेन चाशक्तिरुन्नीयते इति लौकिकोऽयमर्थः। ताद्गून-भक्षणो द्विरणप्रस्तावो[?]च्चाराद्यावश्यकमनुष्यधर्माश्च न व्याजतामुपयान्ति। सर्व-प्राणिसाधारणत्वेन सम्भाविततयापकर्षासूचकत्वात्। कथाविच्छेदाहेतुत्वाच्चेत्यपि लौकिकम्। कथोपक्रमादारभ्य तत्समाप्तिपर्यन्तमस्यावसरः।

ननु व्याजोत्तरस्य प्रकृतानुपयुक्तत्वेनार्थान्तरत्वं यथा, तथा प्रतिभान्यूनाननु-भाषणत्वसङ्करः। उपक्रम एव व्याजोक्ता च प्रतिभात्वञ्च[?] मैवं, कथञ्चित् प्रकृत-मेव साधयामीति प्रकृतान्वयपरतया स्वाज्ञानतिरोधित्साया अभावेनार्थान्तरत्वा-भावात्। कथाव्यवस्थानन्तरमेव व्याजाभिधानेऽस्याप्रतिभाद्यसङ्करात्। न हि तदाऽप्रतिभा, उत्तरावसराभावात्। न न्यूनं; अकिञ्चिदभिधानात्। नाननुभाषणम्, अनुभाष्याभावेनावसराभावात्।

यद्वाऽनूद्य सद्दूषणानन्तरं सभ्यानां निष्ठुरत्वमात्मनो वा हृदयकल्पमनाकलय्य कथादेशादपरतो विक्षपस्यासङ्करः। अवश्योद्भाव्यश्चायं व्याजोत्तरप्रतानस्य दुरुपसंहारत्वात्। व्याजेन कथां न विक्षिपेदिति रहस्यम् ।५।२।१९।

[मतानुज्ञालक्षणम्]

अथ कथानिरूपकाभ्युपगमनिरूप्यत्वसंगत्या दोषनिरूप्य मतानुज्ञादिनिग्रहस्थानत्रिकलक्षणप्रकरणम्। तात्पर्यान्नियमेऽपसिद्धान्तस्य नात्रान्तर्निवेशः। हेत्वाभासप्रकरणस्यैकसूत्रकत्वापत्तेश्च। सूत्रम्—

**स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा।५।२।२०।**

अत्र स्वपक्षपक्षविवक्षायां यद्यपि यत्र वादिना त्वं चौर इति स्थापनायां त्वमपि चौर इत्युत्तराव्याप्तिः। प्रतिवादिनः पक्षाद्यभावात्। हेत्वादिदोषाभ्युपगमाव्याप्तिश्च। दोषस्य चोत्तरविशेषतया स्थापनाविषयाभिधाने प्रागुदाहृते चाव्यापकम्। तथाप्यभ्युपगमेनाभ्युपगन्तव्यस्यावश्यमुपस्थितौ तन्मात्रस्यैव प्रयोजकतया पक्षः सिद्धान्तः दोषः प्रतिकूलतया परेण यत्किञ्चिदुक्तम्, अभ्युपगमोऽनुद्धारः। परपक्षे पराभ्युपगते दोषस्य प्रसङ्ग आपादनम्। तथा च कथायां स्वाभ्युपगतस्य दुष्टत्वस्वीकारो मतानुज्ञेति लक्षणान्न चेदमु[त्तर ?]सूत्रम्। परोक्तं दोषं स्वपक्षे ह्यनुद्धृत्य परस्मै दोषप्रसङ्गेनोन्नीयत इति तथैव सूत्रणात्।

केचित्तु स्वपक्षे दोषमनुद्धृत्य परस्य दोषापादनं मतानुज्ञा।

न चात्राप्राप्तकालत्वम्, परपक्षदूषणानन्तरं स्वपक्षे दोषोद्धार इति समयबन्धं कृत्वा कथाप्रवृत्तौ तदभावात्। यत्र सम्पूर्णमुक्त्वा दुष्टोऽयं सत[न्]इत्यनध्यवसायाद्वदति तत्रास्या अन्यासङ्करः। न हि तत्र हेत्वाभासो नाप्रतिभादि।

अन्येत्विष्टापादनमतानुज्ञासूत्रन्तु स्वपक्षे यो दोषत्वेनोक्तोऽन्येन तस्य परेणाभ्युपगमादिष्टत्वात्; परपक्षे दोषप्रसङ्गो मतानुज्ञेति योज्यम्। न च निरनुयोज्यानुयोगसङ्करः, यत्र प्रथमकक्षायां स्थापनानुकूलतयाऽनिष्टभ्रमेणेष्टमापादयति तत्र मतानुज्ञायामसङ्करात्। तर्हि शिथिलमूलादयोऽपि तर्काभासाः पृथङ्निग्रहस्थानानि स्युरिति न वाच्यम्। व्याप्यत्वासिद्ध एव तदन्तर्भावात्। न चैव शिष्टापादनस्यापि विपर्ययापर्यवसानेन तत्रैवान्तर्भावः स्यात्। विपर्ययापर्यवसानेऽपीष्टस्योपजीव्यत्वे तस्यैव दोषत्वात्। तदनाकलनेऽपीष्टापादकत्वेनैवाशक्तिसूचकत्वाच्च।

अपरे तु प्रसङ्गाभासमात्रं मतानुज्ञा। तेनात्माश्रयाऽन्योन्याश्रयचक्रकानवस्थाभासानां शिथिलमूलपर्ययापर्यवसितेष्टापादनमिथोविरुद्धार्थानाञ्च तर्काभासानां संग्रहः। न हि तेषामन्यत्रान्तर्भाव इत्याहुः।

उदाहरणम्—भवांश्चौरः पुरुषत्वादित्युक्ते, उत्तरवाद्याह—भवानपि चौरस्तत्र एव। अत्र हि परोक्तं स्वदोषमनुद्धृत्याभ्युपगम्य च परस्येदं प्रसञ्जयति। अनभ्युपगमे हि कथं पुरुषत्वं हेतुः प्रयुज्यते।

अथ सदुत्तरमेवेदं, यदि हि पुरुषत्वेन चौरत्वं स्यात्, भवतोऽपि स्यात् । न चैवं तवेष्टम्, तस्मान्न चौरत्वे तद्धेतुरिति प्रसङ्गपरत्वादिति चेत्, न । स्वचौरत्वस्येष्टत्वात् । तदुक्तदोषानुद्धाराच्च । अथ चौरत्वे पुरुषत्वं न तन्त्रम्, किन्त्वदत्तपरस्वादानं, तथा च कथमस्य चौरत्वमिष्टं स्यादिति चेत्, तर्ह्येवमुत्तरे वक्तव्ये परस्यानुमतस्वचौरत्वस्य तदापादानम्, तथा[1] परोक्तं दोषमनुद्धृत्याज्ञानोन्नायकत्वाद्भवति निग्रहस्थानत्वम् ।

ननु मतानुज्ञा कथं न जातिः, प्रतिषेधासंबन्धत्वात् । पुरुषत्वात्त्वमपि चौर इत्युत्तरस्य स्वचौरत्वापादकतया स्वव्याघातकत्वात् । मैवम् । विशेषलक्षणायोगेन-चतुर्विंशत्यामनन्तर्भावात् । निर्विशेषस्य च सामान्यस्याभावात् । तथापि सामान्य-लक्षणयोगबलेनेव त्रयोविंशतिलक्षणहीनत्वेन चतुर्विंशति, तस्या इव चतुर्विंशति-लक्षणायोगे पञ्चविंशति, तस्याः जातित्वं स्यादिति चेन्न, सामान्यलक्षणयोगेन सतोऽपि जातित्वस्योद्भावनानर्हत्वेनासत्कल्पत्वात् । वादिना त्वञ्चौरः पुरुषत्वा-दिति साधिते प्रतिवादी यदि ब्रवीत, तत एव त्वमपि चौरः स्या इति, तदा तृतीयस्थानस्थितेन साधनवादिना जातित्वमुद्भावयितुमशक्यम्, असामर्थ्योद्भावनं विना जातित्वस्योद्भावयितुमशक्यत्वात् । एवं हि तदुद्भाव्ये तत्पुरुषत्वम-प्रयोजकत्वं, चौरत्वेऽदत्तपरस्वादातृ[न]त्वस्य तत्रोपाधि त्वात्, अनैकान्तिकम्वेति । तदा स्वसाधनमप्यनेन दूषितं स्यात् । ततो वस्तुगत्या सदपि जातित्वमुद्भावना-सम्भवेनादृतम् ।

ननु[तदुद्]भावनानर्हत्वेऽपि न जातिसामान्यलक्षणाभावः । न च जातित्वा-पगतानुज्ञाया[2] उपजीव्यत्वात् सैवोद्भाव्या । असामर्थ्यस्येष्टापादनरूपतर्काभासोन्ने-यत्वादिति वाच्यम् । सर्वत्र जात्युन्नायकलिङ्गानामुपजीव्यतया दूषणत्वे जातेरदूषण-त्वापत्तेरिति चेन्न, न हि प्रयोक्तुरनिष्टापादानासामर्थ्यमेव जातिसामान्यलक्षणम्ः, किन्तु तस्यैवोत्तरस्य तदुत्तरतया व्याघातकम् । यदि चास्य स्वचौरत्वमिष्टमेव स्यात्तदा व्याघातमात्रमपि नास्येति कथं तथोद्भाव्यताम् । तथात्वेऽपि चोद्भावन-योग्यत्वे न जातिसामान्यलक्षणं विशेषणीयमित्याहुः ।

एतेन जातिसामान्यलक्षणयोगात् मतानुज्ञाया जातित्वे तद्विभागसूत्रं न्यूनं स्यादिति निरस्तम् । मतानुज्ञोद्भावने तु न कश्चिद्दोष इति तदवकाशः । तथा हि, तृतीयपदस्थितो वादी प्रतिब्रूयात् । तत एव भवानपि चौर इति तत्किं स्वतन्त्रं साधनम्, उत प्रतिकूलतर्करूपः प्रसङ्गोऽथ व्याघातदेशना । आद्ये किमेतावता, नह्येक-

---

१. तथा च 'ख' ।
२. जातित्वानुगतमतानुज्ञायाः ।

मिन्धनमग्निसम्बन्धाद्दग्धमित्यन्यत्र दह्यते। तदाद्ये वा पूर्वस्य दग्धत्वं निवर्तते। न द्वितीयः, प्रसञ्जनीयस्यानिष्टत्वेनासिद्धेः। अथ एव न द्वितीयः, आत्मनः पुरुषत्वे चौरत्वमभ्युपगम्य परस्यापादयतो हि सा स्यात्।

नन्वेवमुत्कर्षसमाविशेषसमानित्यसमापीष्टापत्त्या परिहृतो मतानुज्ञा स्यादिति चेन्न, असमर्थत्वाऽविशेषेऽपि पर[1] प्रसञ्जितोऽर्थो यत्र शक्याऽभ्युपगमः तत्र[त]मङ्गीकृत्य मतानुज्ञाभावनम्। यत्र तु तदभ्युपगमस्यापसिद्धान्तापत्तेर्विरोधापत्तेश्चाशक्यता तत्र जातित्वमुद्भाव्यमिति विशेषात्। न हि कार्यत्वात् क्षित्यादिसकर्तृकं यदि, तदा शरीरकर्तृकत्वमप्यस्तु, इत्युक्ते काममस्त्वित्युत्तरमुचितम्। यथा घटसाधर्म्याद्यनित्यः शब्दः तत्साधर्म्यात्[?]·····।

यद्वा 'त्रैलोक्यमेवाविशिष्टमनित्यं वस्तु' इत्यत्र तदुचितम्। अपसिद्धान्ताद्यापत्तेः। सा चेयमुत्तरकक्षामात्रपातिनी यदसद्विषया।

अन्ये तु स्वपरपक्षसाधारणप्रतिवन्दिवचनं मतानुज्ञा। यथा येनैव शशशृङ्गप्रतिवादिना ईश्वरनिरासस्तेनैवातीन्द्रियनिराकरणमिति प्राहुः। ५।२।२०।

[पर्यनुयोज्योपेक्षणलक्षणम्]

मतानुज्ञाया उद्भावनिरूपनिग्रहस्थानमिति संगत्या सूत्रम् :—

## निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ।५।२।२१।

निग्रहस्थानप्राप्तस्य पतितनिग्रहस्थानस्यानिग्रहोऽवश्योद्भाव्य निग्रहस्थानानुद्भावनं पर्यनुयोज्योपेक्षणं, पर्यनुयोज्योनिग्रहस्थानाद्दुष्टत्वापेक्षणमित्यर्थः। विधेर्विशेषणसंक्रमात्। तथा च निग्रहस्थानोद्भावनावसरत्वेनाभ्युयेते काले पतिततदन्तर्भावनं पर्यनुयोज्योपेक्षणमिति लक्षणम्। विजातीयनिग्रहस्थानप्राप्ताविदमिष्यते तेन पर्यनुयोज्योपेक्षण आपतिते तस्य सभ्यैकोद्भाव्यस्यानुद्भावनेन स्वस्यापि तदापतितं तदपि न पूर्ववदुपेक्षितमित्येकतरवादिनि निग्रहस्थानपर्यवसानत्वं कथायामशक्यावधारणं स्यात्।

ननु प्राप्तवशमालो[?]शङ्कितचरमदोषस्तेयोद्भवन एव कथापर्यवसानात् काऽनवस्था। किञ्च वादे वादिसमूहकर्तृकायाञ्च पर्यनुयोज्योपेक्षणस्यापि वाद्युद्भाव्यमिष्यत एव। तत्र स्वकौपीनविवरणानुचरिताकरणरूपस्य दोषाभावात्। तथा च तद्वत् पक्षादोष एव, उद्भावने च कथाविरागात्। एकस्य पर्यनुयोज्यतयाऽन्यस्य तद्वत् पक्षकतयैव सापराधत्वात्। मैवम्, उपेक्षणोपेक्षणस्यानिग्रहस्थानत्वात्। स्वोद्भाव्यानुद्भावनस्य तत्त्वात्। न चोपेक्षणं वाद्युद्भाव्यम्, तदुद्भावने ह्युपेक्षाविषयदोषोद्भाव-

---

१. चौरप्रसञ्जितो ख।

नावश्यकत्वे कौपीनविवरणापत्तेः । अतएव न प्रतिवाद्युद्भाव्यम् । न ह्यननुमत्तः[१] आत्मानं निगृह्णाति, किन्तु स्थेयोद्भाव्यम् । उपेक्षणोपेक्षणोद्भावने चोपेक्षाविषयप्रथमनिपतितनिग्रहस्थानेनैवार्थसिद्धेरस्य निग्रहयोजकत्वात् ।

न चैवं द्वयोरपि निग्रहे एकस्यैवापराधो न स्यात्, षट्पक्षानुभयोरप्यनुज्ञानात् । एतेनोपेक्षणोपेक्षणमपि स्थेयोद्भाव्यमस्त्वित्यपास्तम् । तस्यादोषत्वे तदुद्भावनसम्भवात् । वादे चोपेक्षांशोद्भावनं व्यर्थम् । येन रूपेण पर्यनुयोगस्तथैवोद्भाव्यत्वात् । तथैव तत्त्वनिर्वाहात् । वादिसमूहकर्तृककथायां पक्षभेद-कथाभेद एव; तदभेदे तु स्वदोषोद्भावनापत्तेः । स्वकौपीनविवरणमेव ।

ननु स्वदोषोपेक्षणोद्भावने परापेक्षया शक्तत्वं भवत्येव, तदज्ञातदोषज्ञानात् । तथा च मम साधनेनैकान्तिकत्वमनेनोद्भावितमिति वादिनाऽप्युद्भाव्यम् । अन्यथा शीघ्रसंवृतादावपि प्रसङ्गः । किञ्च निग्रहस्थानस्य वाद्युद्भाव्यत्वात् कथमकथकस्थेयोद्भाव्यता ।

मैवम्, अखण्डिताहंकारेण पराहंकारखण्डनस्य सभ्योद्देश्यत्वात् । न च तदेवं सम्पद्यते । वाद्यज्ञातदोषख्यापनमात्रस्य च तदनुद्देश्यत्वात् । न च निग्रहस्थानत्वे कथकोद्भाव्यत्वं तन्त्रम्, अपि तु अशक्तिसूचकत्वम्, तच्चात्राक्षतमेव । कथायां समयबन्धेनास्य स्थेयोद्भाव्यत्वनियम इत्यप्याहुः ।

अनेकनिग्रहस्थानसन्निपाते चैकतमोद्भावनं न निग्रहाय, तावतैव प्रकृतसिद्धेः, अन्यथाऽधिकत्वप्रसङ्गात् । समस्ततदुद्भावनप्रतिज्ञाने तु तथा स्यादेव, अन्यथा न्यूनापत्तेः । पुनःस्फूर्तिका न विकृतोद्भावितानुद्भावनमपि निग्रहाय । तदुक्तेरफलत्वेनानुक्तेरुचितप्राप्तत्वात् । प्रतिक्रियासंवृतस्याऽपि न निग्रहत्वम् । यथा नाहमद्य वक्तुं समर्थः, प्रतिश्यायाकर्मण्यकल्पत्वादित्युक्त्वैव तथाप्याव०त्वा[?]द्रव्यत इति विपक्षोपव्यावर्तने ।

ननु चाप्रतिभातः कुतः पृथगिदं प्राप्तं निग्रहस्थानमनुद्भावयते, उत्तराप्रतिपत्तेः । असत्साधनविषयत्वादिति चेन्न, चतुरप्रतिलम्भासामर्थ्यसूचनामात्रस्योभयत्राविशेषात् । अन्यथा प्रतिज्ञाहान्यादेरपि सदसत्साधनविषयत्वेन द्वैगुण्यापत्तेः ।

अथ प्रतिज्ञाहान्यादावापतितेऽपि तदुपेक्ष्य तदुत्तरेण प्रत्यवस्थानेऽसदुत्तरासम्यक्त्वज्ञानेऽस्यासङ्करः, प्रतिज्ञाहान्यादयश्चावश्योद्भाव्याः । अथापूर्वोपात्तं दुष्टं त्यजन् विशिष्यानुपह्नवानो वा यद्युपेक्षेत तदा कथमपि कथाप्रतानविच्छेदो न स्यात् । अप्रतिभायास्तत्रासम्भवादिति चेन्न, अनेकनिग्रहस्थानान्तरपाते यथैकतरतदुद्भावनं न दोषाय । तथा प्रतिज्ञाहान्यासमसमयमनेकनिग्रहस्थानपातेऽप्येकत्र न निग्रहस्थानोद्भा-

---

१. अनुन्मत्तः ।

वनस्यादुष्टत्वात् । तथा च पूर्वोपात्तेत्युक्ते विशेषिते, प्रलपितेऽपि वा यदि निपतिते न निग्रहस्थानान्तरेणाऽपि निगृह्येत, तथापि कथाविच्छेदो भवत्येव । वाद्युत्थापिताकांक्षया स्थैयस्याविष्कारविशेषादेव परं कथाविच्छेदात् ।

अथ प्रतिज्ञाहान्याद्युद्भावनेऽपि यदि तेषां निग्रहस्थानत्वमेव त्यजेद्विशेषयेदपक्ष[1] वीतवा तदा कश्च[?]न प्रतीकारः । अथ प्रतिज्ञाहान्यादौ पतिते तदेवोद्भाव्यं नान्यदिति संप्रतिपत्तिविषयत्वमेवावश्योद्भाव्यत्वं तेषाम् । इयञ्च संप्रतिपत्तिः यद्यपि निग्रहस्थानान्तरसाधारणी, तथाविधसम्प्रतिपत्तिविषयनिग्रहस्थानोपेक्षणमेव पर्यनुयोज्योपेक्षणमित्युच्यते । न, एवं हि निग्रहस्थानान्तरेणानुयोगस्यानौचित्यापत्तेः । अनुयोगे वा निरनुयोज्यानुयोग्यापत्तेः । कथाप्रतिभोक्षेपणेऽस्यासंकरः । न, निहितदूषणाप्रतिपत्तिमात्रमप्रतिभा, प्रथमकक्षापातित्वाभावप्रसङ्गात् । किन्तु वचनावसरे वचनाप्रतिपत्ति, तथा च तत्राप्रतिभैव । अत्र साधनदूषणपरिहाररूपत्रिपर्वणि कथायां साधनदूषणाज्ञानेऽप्रतिभा । यत्र च दूषणे समाधानाभासवादि समुपेक्षते तदा पर्यनुयोज्योपेक्षणमित्येके ।

साधनं यत्रोच्यते मानग्राह्योपेक्षणम्, यत्र वा स्तम्भोपेक्षणं तत्रास्यासङ्कर इत्यन्ये ।

ननु सदुत्तरं वदन् प्रौढ़तया क्षुद्रस्खलितोपेक्षणो नैव निग्रहमर्हतीति चेन्न, अवश्योद्भाव्यत्वसम्प्रतिपत्तिविषयनिग्रहस्थानोपेक्षण एव पर्यनुयोज्योपेक्षणस्येष्टत्वात् ।

क्वचिदवचनेऽनन्यवचने वा पर्यनुयोज्योपेक्षणं न निग्रहस्थानम् । तथा हि, असत् साधने[वादिना]प्रयुक्ते यदि प्रतिवादिनस्तूष्णीम्भावः; तदा तेनैव स्थापनायाः दुष्टत्वं सूच्यते । तथाप्यसौ सम्यग्दोषमनुक्त्वा दोषाभासं समुद्भावयति तत्रापि तस्याः सदोषत्वमेवाह—'दुष्टे साधने दुष्टमेवोत्तरं देयमिति न्यायादित्याहुः' ।

तन्न, अनिर्णीतप्रमाणभाववचने वादिन्यतथात्वात् । यदाहुः—

श्रुतिस्मृतिविरोधेन यत्तु जल्पकभाषितम् ।
तद्यथा श्रुतिदुष्टञ्चेद्दुष्टमेवावधार्यते ॥ इति ।

अन्यत्र सभ्यानां दोषोद्भावनानवसरेऽप्यत्र तेषां तदधिकारः । प्रश्नादौ सति तद्भावात् । अन्यथा तदुपादानवैयर्थ्यात् ।५।२।२१।

[निरनुयोज्यानुयोगलक्षणम्]

अनुयोगनिरूप्यत्वसंगत्या सूत्रम्—

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ।५।२।२२।**

---

१. पक्ष ख ।

अनिग्रहस्थानेनापि तन्निग्रहस्थानाभियोगो दोषत्वेन तदुद्भावनम्। यद्वा पर्युदासनञा निग्रहस्थानभिन्ने विषये निग्रहस्थानत्वेनोद्भावनं निरनुयोज्यानुयोग इत्यर्थः।

यद्यप्येतद् यथाश्रुतमनवसरग्रहणव्यापकं, तत्रावसरग्रहणव्यापकम्, तत्रावसरप्राप्त्यनिग्रहस्थानापन्नस्यैव तन्निग्रहस्थानेनाभियोगात्, तथापि तन्निग्रहस्थानोद्भावनावसरे तन्निग्रहस्थानोद्भावनं तन्निग्रहस्थानम्। तन्निग्रहस्थानोद्भावनातऽन्निग्रहस्थानोद्भावनाऽभ्युपेतावसरे तन्निग्रहस्थानोद्भावनं वा निरनुयोज्यानुयोग इति लक्षणम्। तेन निग्रहस्थानमात्रशून्ये निग्रहस्थानान्तरापन्ने उद्भाव्यमाननिग्रहस्थानव्यतिरेके वा, वादिनि निग्रहस्थानत्वानुपपन्नस्यैव तत्त्वेनोद्भावने वा सर्वसंग्रहः।

नन्वाद्येन तच्छब्देन निरनुयोज्यानुयोगो विवक्षितो न वा? आद्ये आत्माश्रयः। अन्त्ये त्वव्याप्तिः। निरनुयोज्यानुयोगाभावे तदनुयोगस्यैवाव्यापनात्। न च शब्दोऽभिधायक इतिवत् सामान्यतः स्वाभिधानेऽप्यदोष इति वाच्यम्। स्वसिद्धौ स्वापेक्षत्वादिति चेन्न, निग्रहस्थानत्वेन सामान्यतस्तत्परिग्रहे तदभावात्, निग्रहस्थानत्वस्य च ज्ञातत्वात्। अनुयोगानर्हानुयोगस्तल्लक्षणमित्यन्ये।

ननु नेदं निग्रहस्थानान्तरम्। यथायथं जातौ विरोधो नैकान्तिकादेः सत्त्वात्। छले च नवसंख्यककम्बलत्वस्यासाधकतासाधने सिद्धसाधनात्। अनवसरग्रहणेऽप्याकाङ्क्षितकालात्ययेऽभिधानादप्राप्तकालत्वात्। तत्र जल्पादौ यत्र तत्त्वनिर्णयविरोधनिग्रहस्थानमेवोद्भाव्यमिति नियमबन्धः कृतः, तत्रान्यनिग्रहस्थानस्यापतितस्य प्रतिज्ञाहान्यादेरुद्भावनेऽस्यासङ्कर इत्येके।

छलादीनां येन रूपेणाशक्त्युन्नायकत्वं तस्यात्राभिधानम्। न हि छलादिभिश्छलत्वादिनैव शक्तिसूचनम्। तेषां वाद्यवृत्तित्वेन वैयधिकरण्यात् तद्वक्तृत्वस्य छलान्यत्वादित्यन्ये।

स च चतुर्विधः—छलं जातिराभासोऽनवसरग्रहणं च। छलस्याभासत्वेऽपि गोवृषन्यायेन विभागः। छलमुक्तं जातिश्च। आभासश्च नान्योऽसदनुयोगः। अनापतितनिग्रहाभियोग इति यावत्।

यथाऽनेककल्पस्फुरणेऽनिष्टकल्पत्यागेन प्रतिज्ञाहानिः। प्रकरणाद्यापन्नविशेषणाविष्करणे प्रतिज्ञान्तरम्। नञ् प्रयोगमात्रेण विरोधः। आरोपितानभ्युपगमेन सन्न्यासः। स्वयमगृहीतस्य विशेषणस्य पुनरुत्कीर्तनेन हेत्वन्तरम्। वस्तुतः प्रस्तुतार्थगुणेऽप्यापातस्तथा न व्यवसायेनार्थान्तरम्। आत्मनो वैयाकरणत्वेन वाचकप्रयोगेऽवाचकत्वादभियोगेन निरर्थकम्। आत्मनः परिषदेकदेशस्य वा[ऽ]नवरोधेनाविज्ञातार्थम्। पूर्वापरयोगेऽपि स्वयमप्रतिसन्धानेनापार्थकम्। अनवधानाद्विपर्ययेणाप्राप्तकालम्। अन्यत्र व्यासङ्गादश्रुतेन न्यूनम्। पार्श्वस्था ह्युक्तेन हेत्वादिनाऽधिकम्। श्रुतिसाम्यमात्रेण पुनरुक्तम्। तदप्रसिद्धपदैरनुवादेनाननुभाषणम्। अननुबोधिताया-

मपि परिषदि स्वावष्टम्भमात्रेणाज्ञानम्। चतुरं वदतोऽपि स्वेदादिना प्रतिभाक्षयः। आवश्यकप्राणिधर्मेणः विक्षेपः। सिद्धसाधने मतानुज्ञा। स्वदोषोद्भावनेन पर्यनुयोज्योपेक्षणम्। स्वच्छलजात्योस्तदुद्भावनेन निरनुयोज्यानुयोगः। अभ्यस्तशास्त्रातिक्रमेऽपसिद्धान्तः। उक्तिमात्रेण हेत्वाभास इति निग्रहस्थानाभासाः।

तथानुपयुज्यत्वे प्रतिज्ञाहान्यादौ प्रतिज्ञान्तरादिछलोऽपि जातिः। वाक्छलादावपि छलत्वेनोपचारछलादि। नाधर्म्यसमादावपि जातित्वेन प्रकरणसमादि। अत एव निग्रहस्थानापन्नो हि निरनुयोज्यानुयोज्योऽत्र विवक्षितः तस्यानुयोगोऽपि तन्निग्रहस्थानोद्भावनम्। एवं हि सर्वसंग्रहः।

अनवसरग्रहणन्तु यथोक्तावसरप्राप्त्यातिक्रम्य वा ग्रहणम्। यथा लक्ष्यसि चेत् प्रतिज्ञाहानिः। विशेषयिष्यसि चेत् हेत्वन्तरम्। अयं तावदनेन दोषेण दुष्ट एव हेतुरदुष्टो वा, तथापि पूर्वस्था[पना]त्वया त्यक्त इति हेतुहानिः। विशिष्टस्तावदयमदुष्टः, पूर्वं त्वविशिष्ट एव त्वयोपात्त इति हेत्वन्तरमित्युक्तग्राह्ये पुनरवसरः। तथोच्यमानग्राह्यमपशब्दविरोधाप्राप्तकालादावुच्यमानग्राह्ये उक्तिसमाप्तौ ग्रहणम्।

ननु चापशब्दादिकमप्युक्तिसमाप्तिग्राह्यमेव, उच्यमानतादशायामपशब्दादेव शक्यनिश्चयत्वादित्यादिपदैः स्वरूपपरत्वेनानुवादादिसंभावनया साधुत्वासाधुत्वसंशयानुवृत्तेः। अन्यथातिप्रसङ्गात्। न, अर्थपरत्वनिश्चयेन यत्र तादृशसंशयनिवृत्तिः, तत्रोच्यमानग्राह्यत्वाभिधानात्। तदनिश्चये तदस्याऽप्युक्तिसमाप्तिग्राह्यत्वात्। यस्य यदा निश्चयः, तत्तदोद्भाव्यम्, प्रवृत्तोद्भावनकालातिक्रमस्याज्ञानापातात्। अनुक्तग्राह्यमज्ञानाद्यननुभाषणावसरे प्रथमं हि सभ्यज्ञातवादिवचनार्थाबोधमाविष्कृतवत अज्ञानमापतितम्, तत्तदा नोद्भावितम्। ततोऽवबोधमाविष्कृत्यानुभाषणवृत्तये वादिन्यज्ञानोद्भावनं भवत्यवसरमतीत्यग्रहणम्। उदाहरणमात्रमेतदन्यदप्यूह्यम्। सामयिकोऽयं नियम इत्यप्याहुः।

एतावत् प्रपञ्चसूचनायैव महतः सूत्रस्य प्रणयनम्। अन्यथा त्वनिग्राह्यनिग्रह इत्येवं सूत्रं प्रणयेदिति ।५।२।२२।

[निग्रहस्थानद्वयप्रकरणम्]

[अपसिद्धान्तलक्षणम्]

हेत्वाभासानां कथावसानिकत्वेन शेषे तदभिधानस्य न्यायप्राप्तत्वात् सङ्गतिः। कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयलक्षणं प्रकरणार्थः। अपसिद्धान्तहेत्वाभासयोः शास्त्रकारोक्तत्वयथोक्तत्वाभ्यां निरूपणात् सूत्रम् :—

**सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ।५।२।२३।**

परिगृहीतसिद्धान्तातिक्रमात् प्रसञ्जनं, प्रसङ्गः प्रवर्तनं तेन परिगृहीतसिद्धान्तविरुद्धार्थाभ्युपगमोऽपसिद्धान्तः। तेन त्यागाभ्युपगमोऽभ्युपेतार्थविपरीताभ्युपगमस्तथा भवत्येवेति नाव्याप्तिः। यथा सांख्यस्य सत्कार्यवादमभ्युपगत्यासदुत्पद्यते सन्निरुध्यत-इत्यभिधानम्।

ननु कथमयं विरोधाद्भिद्यते स्ववाच्यव्याघातरूपोऽविरोधः, अयन्तु शास्त्रकारकथकव्याघातरूप इति चेन्न, अत्रापि स्ववाक्यव्याघातसत्त्वात्। नैयायिकोऽहमित्यादेः कथकपूर्वाभ्युपगमस्य विरोधानुपनयनेऽभ्युपगमविरोधो न दोषायेति। तदुपनयनस्यावश्यकत्वात्।

मैवम्, पराभ्युपगमविरोधस्योपजीव्यत्वेन पृथग्दोषत्वात्। पराभ्युपगमविरोधं प्रतीत्यैव कथकाभ्युपगमयोर्विरोधावधारणात्। न हि 'नैयायिकोऽहम्' इत्यभिधाय, 'अभौतिकानीन्द्रियाणि' इति वचनं 'इन्द्रियाणि भूतेभ्यः' इति परामर्षवचनमनवधार्य्य व्याहतं वक्तुं न शक्यते।

नन्वेवं सूत्रस्यागमरूपत्वात्तद्विरोधो बाध एव स्यात्। आगमविरोधोऽपि वाऽपसिद्धान्त एवेति चेन्न, बाधकस्याधिकबलस्य प्रामाण्योपजी[व्यत्वात्] न बाधः। उपेतशास्त्रकाराभ्युपगमासमीचीनत्वेन तद्विरोधेऽपसिद्धान्त इति विशेषात्। क्वचित् सङ्करस्यादोषत्वाच्च। अत एव सौगतेन सह कथायां मीमांसकस्य वेदविरोधोऽपसिद्धान्त एव। तीर्थिकेन सह कथायां सौगतस्य स्वागमविरोधात्। अङ्गीकृत्य कणादाक्षपादप्रामाण्ययोरविप्रतिपत्तौ कथाया एवाप्रवृत्तिः। विप्रतिपत्तावुभयप्रामाण्याऽभ्युपगमपरित्यागः, उक्तिसम्भवस्तवस्यास्फूर्तिदशायामस्मन्मतानुभिज्ञोऽयमिति वाद्यवज्ञानादन्यथा व्याख्यास्यामीति सौटीर्यादेकदेशिमतं तदिति वैजात्या तत्साक्षान्नोक्तमिति व्यामोहात्।

सौगतास्तु न शास्त्राश्रयाः वादाः भवन्तीत्यपसिद्धान्तो न निग्रहस्थानमित्याहुः।

कीर्तिरप्याह—

रिक्तस्य जन्तोर्जातस्य गुणदोषमपश्यतः।
विलब्धाय[ब]तकेनामी सिद्धान्तविषय[म]ग्रहाः॥ इति[प्रमाणवार्त्तिकम्, ४।५४]

कथानुगुणसमयविषयप्रमाणदूषणाभ्यामेव कथाप्रवृत्तेरुपपत्तेः। शास्त्रमनाश्रित्य कथारम्भानुपपत्तिरिति चेन्न, हेत्वभावात्। न हि कथारम्भस्य शास्त्राश्रयणं व्यापकं कारणं वा।

अथ तदाश्रयणं विनाऽतिप्रसङ्गः। तथा ह्यमूर्तिमता नैयायिके [न ?] लक्षणभङ्गसाधनप्रयुक्तसिद्धसाधनमुद्भाव्य यदि सौगताः निगृह्यन्ते, तदाऽपसिद्धान्तोद्भावन-

मन्तरेण किं कुर्यात् । तूष्णीम्भावेऽप्रतिभापत्तेः । आद्याविप्रतिपत्तिविरोधात् । पूर्वापरव्याघातरूपं निग्रहस्थानान्तरमेवोद्भाव्यमिति चेत्तर्हि तदनुगुणवस्त्वन्तरव्यतिक्रममप्युद्भावयेत् । विरोधस्याविशेषात् । यथा हि स्थैर्यं त्यजतो विरोधः, तथा तदनुगुणप्रत्यभिज्ञानप्रामाण्यमपि त्यजतो विरोध एव ।

न चैकपुरुषार्थो गुणाङ्गाङ्गिभावव्यवस्थितपदार्थसार्थव्युत्पादनादन्यच्छास्त्रम् । न च समस्ततदनुगुणपदार्थजातं स्वेन रूपेणाभिज्ञातुं शक्यम्, तद्धेतोर्विशिष्य तत्तद्रूपेण ज्ञानस्यैवाशक्यत्वात् । तदेव शास्त्रप्रणयनप्रसङ्गात् । परिषदनपेक्षितत्वाच्च । न च तद्व्यतिक्रमोद्भावनाय समस्ततदनुगुणोहः परस्परशास्त्रमनाश्रित्य शक्यः । न च तदनुगुणव्यतिक्रमे तदपेक्षणे वा । तत्त्वविज्ञप्तिविजयावित्यकामेनापि तदधिकारप्रवृत्तं शास्त्रमेवाश्रयणीयमिति । तन्न, तदनुगुणाभ्युपगमावश्यकत्वे मानाभावात् । न चोपायानभ्युपगमे उपेयाऽभ्युपगमोऽसम्भवी, उपायत्वापरिचयेऽप्यविरोधात् । न चानुगुणाङ्गीकारेऽपि शास्त्राश्रयणमावश्यकम् । न हि शास्त्रे सर्व एव शास्त्रार्थः । परस्परमुपोद्धातत्वानेव । किन्तु विरोधिमात्रम् । न हि शब्दानित्यत्वाऽभ्युपगन्तुर्द्वित्वादेरपेक्षाबुद्धिव्यङ्ग्यत्वाङ्गीकारे तदभ्युपगमो विरुद्ध्यत इति न तत्रापसिद्धान्तः स्यात् । किञ्च शास्त्रविशेषमनाश्रित्याव्युत्पन्नानां तदनुगुणोहः सम्भवत्येव ।

अथ कथातः पूर्वं स्वीकृतस्य कथायां त्यागोऽपसिद्धान्तः । कथातः प्रागभ्युपगमश्चावश्यं वाच्यः । समयबन्धं विना कथायामप्रवृत्तेः । न चैवं हेत्वाभासाभिधानमपसिद्धान्तः स्यात् । न हि भ्रमाद्धेत्वाभासं वदन् हेत्वाभासस्यावचनीयत्वाऽभ्युपगमं जहातीति मतम्, तदिति तुच्छम् । शब्दोऽनित्यः श्रावणत्वादिति शब्दत्वेऽनैकान्तिकत्व उद्भाविते तन्नित्यत्वं परिहरतोऽप्यपसिद्धान्तापत्तेः । न हि शब्दनित्यत्वकथायां शब्दत्वनित्यत्वस्वीकारः प्राक्समय इति । मैवम्, तत्तत्कथायास्तु तत्तत्फलनिश्चयं विना कथायामप्रवृत्त्या सभ्यानां कथयोश्च तन्निश्चयस्यावश्यवाच्यत्वात् । स च प्रतिव्यक्ति न सम्भवति, आनन्त्यादिति । सामान्यभावे तस्याभ्युपेयत्वात् । तत्र च तत्प्रमाणतद्विशेषदूषण-तद्विशेषसमयस्याशक्यत्वात्, तदानीं परिषदनपेक्षितत्वाच्च । सामान्यान्तरस्य चाननुगततत्तच्छब्दानित्यत्वादिषु तदनुगुणेषु तेषु तेषु पदार्थेषु सत्त्वादनन्यगत्या शास्त्रपरिग्रह एव कर्तव्यः । तथा च स्वाभ्युपगतविरोधस्येव तद्विरोधस्यापि दूषणकत्वम् । तथापि तदनुगुणमात्रविरोधोऽस्तु दूषणम् । शास्त्रव्युत्पादि च विरोधस्तु कथमिति चेन्न, सर्वस्यैव शास्त्रप्रतिपाद्यस्य दृष्टान्तत्वादिना यथाकथञ्चिदगुणत्वात् । विशिष्य समयबन्धस्याशक्यत्वे, सामान्यतः तत्प्रतिपाद्यत्वेन तस्यापि विषयीकरणाच्च । अत एवोपायत्वापरिचयेऽप्युपेयाऽभ्युपगम इति परास्तम् । प्रवृत्त्यन्यथानुपपत्तेरुपायत्वनिश्चयस्यावश्यकत्वात् ।

यत्त्वपसिद्धान्तलक्षणे दूषणं सिद्धान्तविपरीताऽभ्युपगमशब्देनैकसिद्धान्तविपरीतमभ्युपगच्छतोऽपरस्यापसिद्धान्तापत्तिरित्यतिव्याप्तिः । यदा चापसिद्धान्तस्य दूषणतायामसिद्धिं कुर्यात्तदा किं वाच्यमिति, तन्न, कथकाशक्तिसूचकत्वरूपनिग्रहस्थान-

सामान्यलक्षणानुवृत्तेरेवातिव्याप्तिनिरासात् । सिद्धान्तस्यापि[1] त्वादिशब्दवत् । सम्बन्धिशब्दत्वात् सम्बन्धिशब्दत्वेऽपि वाद्युपगमपदोपस्थापिताऽभ्युपगन्तृसम्बन्धिन एव सिद्धान्तस्याभिधाने विपरीतपदेनापि सम्बन्धिशब्दतयैव तद्विपरीतोपनयने तद्विषयस्याभ्युपगमस्य प्रतिपत्तौ लाघवेन तस्यैव सिद्धान्तस्य यद्विपरीतं तस्यैवाभ्युपगन्तुरुपस्थितेः । व्यक्तिवचनानां सन्निहितविशेषपरत्वादिति न्यायात् । अपसिद्धान्तदूषणत्वासिद्धिवादिनोऽप्यपसिद्धान्त एवोद्भाव्य इति ।५।२।२३।

[हेत्वाभासलक्षणम्]

## हेत्वाभासाश्च यथोक्ताः ।५।२।२४।

हेत्वाभासाः यथा येन प्रकारेण, उक्ताः लक्षिताः, तथैव तेनैव रूपेण निग्रहस्थानानि, तथा येन रूपेणासिद्धत्वादिना तेषां हेतुदूषणत्वं तदेव रूपं पुरस्कृत्य हेत्वाभासप्रयोक्तृतया कथकाशक्त्युन्नयनमपीति सूत्रार्थः ।

यद्यपि विप्रतिपत्त्युन्नायकत्वेन निग्रहस्थानत्वं, तेन च रूपेण न ते लक्षिताः, तथापि हेतुत्वाभिमतस्योद्देश्यार्थमिति प्रतिबन्धकं यथार्थज्ञानविषयत्वमेव रूपमत्र विवक्षितम् । अत एव हेत्वाभासास्तर्हि दुरुहतया पृथक् परीक्ष[क्ष्य]न्तामित्यपेक्षायामिदं सूत्रम् । "**तथैव परीक्षिताः**" इति चात्र शेषे देयः । तेन यथोद्दिष्टा लक्षिताश्च तथेत्यर्थः । परीक्षा च "**यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः**"[२।१।७।]इत्यनेन कृता ।

यद्वा सामान्यतः 'तत्त्वाध्यवसाय'[2]—सूत्रितात्[3] पर्यालोचनया जल्पवितण्डापरिकरतया विशेषतः परीक्षा कृतेति कस्यचिद्व्याख्यानं शस्तम्[4] । अतिदेशातिपरीक्षा तत्कीर्तने प्रयोगाभावाच्च । अनुक्तसमुच्चयार्थश्चकारः । विरोधादिनिग्रहस्थानोत्तीर्णस्य हि प्रयोगस्य चतुर्धा दुष्टत्वम् । हेतुतो नैकान्तिकत्वादिना, दृष्टान्ततः साध्यविकलत्वादिना, तर्कत आत्माश्रयादिना, उक्तितोऽर्थपदाश्रितान्वयविपर्ययोपदर्शिताऽन्वयादिना । तत्र प्रथमायां स्वशब्देनोपात्तायामनुक्तं विधात्रयं निग्रहस्थानत्वेन व्यवहर्तव्यमिति चकारार्थः । प्रतिज्ञाहान्यादिव[द]शक्तिसूचकत्वाविशेषोऽपि न ते पृथगुक्ताः । हेत्वाभासपर्यवसायित्वं तेषामिति ज्ञापनार्थत्वात् । तथा हि साधनत्वे दृष्टान्ताभिमतस्यासाधारण्यम् ।

---

१. सिद्धान्तस्य पित्रादिशब्दवत् ।

२. तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे, बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् । ४।२।५०। इति सूत्रात् ।

३. सूत्रात् ख.

४. परास्तम् ।

यद्यपि क्षितिकर्ताऽभिधेयः, क्षितिकर्तृत्वात्, चैत्रवदिति साधनविकले विपक्षाभावान्नासाधारण्यम्, तथापि व्यतिरेकधर्मसाध्यत्वे तथात्वम्। न च यत्रायोगोलकमहानसयोर्दृष्टान्तयोरूपन्यासः, तत्र धूमवत्त्वस्य साधारण्ये सकलपक्षव्यावृत्तेरभावादिति वाच्यम्। तत्राधिकस्यैव निग्रहस्थानत्वात्। साध्यवैकल्ये च विरुद्धत्वं, उभयवैकल्ये च व्याप्यासिद्धत्वम्।

एवं दृष्टान्तधर्मिणोऽसिद्धौ व्याप्यत्वासिद्धिः। व्यतिरेकदृष्टान्ते साध्याव्यावृत्तावसाधारण्यम्। इदमपि पूर्ववत् प्रामिकं [?] तत्रैव साधनाव्यावृत्तौ विरोधः। उभयावृत्तौ व्यतिरेकव्याप्त्यसिद्धिः। दृष्टान्तधर्मिणोऽप्यसिद्धौ व्यतिरेकव्याप्त्यसिद्धिः। आत्माश्रये इतरेतराश्रये चक्रके च पक्षनिष्ठ[1]आश्रयासिद्धिः, हेतुनिष्ठे स्वरूपासिद्धिः, दृष्टान्तनिष्ठे दृष्टान्तासिद्ध्या व्याप्यत्वासिद्धिः। अनवस्थायाञ्च प्रथमस्याव्यवस्थिततावत्। प्रवाहापेक्षिते तु तस्य च प्रागसिद्धा वाद्यासिद्ध्याश्रयासिद्धिः। अथाद्योऽव्यवस्थिततावत्[2], प्रवाहापेक्षद्वितीयापेक्षी[3] न भवति तदाऽद्यस्य पक्षत्वे समवायापेक्षित्वे चानैकान्तिकम्। एवं प्रतिकूलतर्काभासयोरपि व्याप्तिसिद्धिः, तथानुपदाश्रितान्वयादावपि। वस्तुतःसद्धेतुत्वेऽपि वचनदोषाद्व्याप्त्यप्रतिपत्तिरित्याद्यूहनीयम्। तर्हि हेत्वाभासान्तर्गतत्वे............।

इति महामहोपाध्यायश्रीगङ्गेश्वरात्मजोपाध्यायश्रीवर्धमानविरचिते
अन्वीक्षानयतत्त्वबोधे पञ्चमाध्यायस्य द्वितीयमाह्निकम्।

———

१. पक्षनिष्ठे।

२. प्रवाहेत्यारभ्य एतावत्पर्यन्तं ख पुस्तके नास्ति।

३. द्वितीयापेक्षां।

## परिशिष्टम् (१)

# पञ्चमाध्यायसूत्रसूची

## परिशिष्टम् (२)

# अस्मिन् ग्रन्थे समुद्धृता आचार्याः, सम्प्रदायाः, ग्रन्थाश्च